सरस्वतीभवन-ग्रन्थमालायाः

एकोनशततमं पुष्पम्

श्रीकेशवमिश्रविरचितम्

# द्वैतपरिशिष्टम्

( धर्मशास्त्रीयमैथिलनिबन्धरूपम् )




सम्पादकः

श्रीदुर्गाधरझाः

वाराणसेय-संस्कृत-विश्वविद्यालयः

# SARASVATĪ BHAVANA GRANTHAMĀLĀ

*Vol. 99*

**General Editor**
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.



# DVAITAPARIŚISTA

*By*

**Keśhava Miśra**

*Edited by*

**Durgādhar Jhā**
Research Asistant

Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.

VARANASI
1972

Published by —
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi–2.

Avalable At —
Prakaśan Vibhāg
Varanaseya Sanskrit Vishvavidyalaya
Varanasi–2.

Frist Edition : 500 Copies
Price Rs. 8 Eight Rupees

Printed by —
Sudarśan Mudraka
Uttar Beniya, Varanasi–2

सरस्वतीभवन-ग्रन्थमाला
( ९९ )

प्रधानसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थानसञ्चालकः
वाराणसेय-संस्कृत-विश्वविद्यालये

श्रीकेशवमिश्रविरचितम्

# द्वैतपरिशिष्टम्

सम्पादकः
श्रीदुर्गाधरझाः
अनुसन्धानसहायकः
वाराणसेय-संस्कृत-विश्वविद्यालये

वाराणस्याम्
२०२८ तमे वैक्रमाब्दे १८९३ तमे शकाब्दे १९७२-तमे ख्रिस्ताब्दे

प्रकाशकः —
सञ्चालकः
अनुसन्धानसंस्थानस्य
वाराणसेय-संस्कृत-विश्वविद्यालये

प्राप्तिस्थानम्—
प्रकाशनविभागः
वाराणसेय-संस्कृत-विश्वविद्यालयः
वाराणसी–२

प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम् ८) अष्टरूप्यकाणि

मुद्रकः—
सुदर्शनमुद्रकः
उत्तरबेनिया, वाराणसी–२

# प्रास्ताविकम्

मनुष्यो हि विश्वरचनायाः केन्द्रविन्दुः । तदर्थमेव समग्रायाः सृष्टेः प्रादुर्भावः । स एव पूर्वोपार्जितधर्माधर्मद्वारा जगतो जनेर्मूलम् । न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्तीति सिद्धान्तः सर्वसम्मतः । जगदुत्पत्तिहेतुतया विचार्यमाणे बीज-प्रयोजने च मनुष्यस्य पूर्वकर्मतत्फलभोगरूपे एव सिध्यतः । मनुष्येण पूर्वजन्मसु कृतानि कर्माणि स्वफलभोगसाधनाय यथा तस्योत्तरजन्मानि निर्वर्तयन्ति, तथैव पूर्वसृष्टौ तेनोपार्जितानि कर्माणि स्वप्रभवपुण्यपापाह्वयव्यापारद्वारा नवीनां सृष्टिं प्रवर्तयन्ति । अतः सम्यगेवैतद् यदखिलं जगन्मनुष्यकर्मफलभोगात्मनः प्रयोजनस्य पूर्तय एव प्रवृत्तम् ।

मानवः स्वोत्पादकादृष्टप्रेरितो यं यमर्थमात्मनो हिताय कामयते, स यद्यप्यनन्तो न केनापि प्रातिस्विकतया प्रतिपादयितुं परिगणयितुं च शक्यः, तथापि मानवस्य मानसव्यापारपरिशीलनप्रज्ञैर्भारतस्य तत्त्वदर्शिमनीषिभिः स सर्वो पुरुषार्थतयाऽनुगमय्य धर्मार्थकाममोक्षशब्दैश्चतुर्धाऽभ्यधायि । प्रसिद्धा हि धर्मार्थकाम-मोक्षाश्चत्वारः पुरुषार्था इति । एषु प्रथमे त्रयस्त्रिवर्गात्मना भारतस्य प्राचीने संस्कृत-वाङ्मये वर्णिताः । तत्र साधारणो लोकस्तेषां हेतुहेतुमद्भावमित्थमभिप्रैति यद् धर्मोऽर्थस्य, अर्थश्च कामस्य हेतुः । कामश्च द्विविधः सुखरूपो दुःखनिवृत्तिरूपश्च मानवस्य लक्ष्यः । तदित्थं कामपारतन्त्र्यादेव मानवो धर्ममर्थं चार्जयितुं प्रवर्तते । तयोरपि धर्म एवार्थस्यापि हेतुतया तदर्जनमेव मानवप्रयत्नस्य प्रथमो विषयः ।

श्रीमद्भागवते भगवता व्यासेन धर्मार्थकाममोक्षाणां मिथः सम्बन्धो याथातथ्येनेत्थं निरूपितो यत्—

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते।
अर्थस्य धर्मैकान्तस्य कामो लाभाय न स्मृतः॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः॥

एतस्य व्यासवचनस्यायमभिप्रायो भृशं स्फुटो यद् धर्मस्यार्थ एव, अर्थस्य काम एव, कामस्य च तदनुगुणे कर्मजाते प्रवृत्तिरेव न फलम्, किन्तु मोक्षो यस्त्रिवर्गेऽपरिगणितश्चतुर्थः पुरुषार्थः, स एव मुख्यो मानवस्य लक्ष्यः। यावत्तल्लक्ष्यं न सिध्यति तावदकृतार्थमेव मानवजन्म। तल्लक्ष्यं च तत्त्वज्ञानसाध्यम्। अतस्तत्त्वजिज्ञासैव-तत्त्वविचार एव मनुष्येण सर्वात्मना साध्येतेत्येतदेव समुचितम्। धर्मोऽर्थः कामश्चेति त्रयोऽपि तदनुगुणतयैवैष्टव्याः। अर्थ एव धर्मस्य, काम एवार्थस्य लक्ष्यो न मन्तव्यः, किन्तु समेषामेषां मोक्षानुकूल्येन चयनं कार्यम्।

पुरुषार्थेषु धर्मस्य प्रथमं मोक्षस्य च चरमं परिगणनेनेदमेव निर्विवादं निर्धारणीयं भवति यद् धर्म एव उत्तरेषां त्रयाणां प्रथमं प्रधानं च साधनम्, मोक्ष एव चाद्यानां त्रयाणां मुख्यं चरमं च लक्ष्यम्। अतः स्पष्टमिदं यत्सर्वपुरुषार्थानां प्रथमोपायस्य धर्मस्यैव ज्ञानमर्जनं च मनुष्येण सम्पाद्यम्। तत्राधर्मो धर्मतया कदाचिन्न गृह्येत संगृह्येत च, न वा धर्मः कदाचिदज्ञाततयाऽन्यथाज्ञाततया वोपेक्ष्येतेत्यभिलक्ष्य भारते 'धर्मशास्त्र' नामकं प्रस्थानं महता प्रयत्नेन प्रादुर्भावितं ग्रहणधारणार्थानुष्ठानैर्भारतीयजनतयाऽभिरक्षितं च।

तत्र धर्मशास्त्रं सूत्र, संहिता, भाष्य, निबन्धभेदाच्चतुर्धा विततम्। सूत्रात्मकं गौतमधर्मसूत्रादिनामभिः प्रसिद्धम्, संहितात्मकं मनुयाज्ञवल्क्यस्मृत्यादिनाम्ना सुविख्यातम्, मेधातिथिभाष्यमिताक्षरादिनाम्ना भाष्यात्मकं तदभिविश्रुतम्। निबन्धात्मकं च चतुर्वर्गचिन्तामणिप्रभृति नानाविधम्। एषु निबन्धा एव धर्मनिर्णयकतया प्राधान्येनाभिमताः, यतो हि तेष्वेव विभिन्नानां धर्मवचनानां सामञ्जस्यसमन्वययोः स्थापनया विवक्षितविशेषे तात्पर्यं निर्णीय धर्माः स्वरूपतः साधनतः फलतश्च निरूपिताः। सूत्रसंहिताभाष्यात्मकेभ्यो धर्मशास्त्रग्रन्थेभ्यो यदैव धर्मस्य धर्माणां वा निर्णयो दुःशकः प्रतिभाति तदैव तदुपजीवी निबन्धः प्रादुर्भावं लभते। अतएव देशकालभेदेन समुत्पन्नानामावश्यकतानां पूर्तये पूर्वमनेके निबन्धा धर्मशास्त्रमर्मज्ञैर्मनीषिभी रचिता उत्तरकालेऽपि रचयिष्यमाणतया सम्भाविताश्च।

प्रस्तुतो 'द्वैतपरिशिष्ट' नामा निबन्धः पूर्वप्रामाणिकनिबन्धानामेव परिपूरकः, यथा तद्रचयितुर्वचनादेव विस्पष्टम्। तथा हि—

अधीत्य सर्वतन्त्राणि निबन्धानवलोक्य च।
श्रीकेशवेन विदुषा परिशिष्टमिहोच्यते॥

एतन्निबन्धनिर्माता श्रीकेशवमिश्रो मिथिलाया महतो धर्मशास्त्रविदुषो द्वितीयस्य वाचस्पतेः पौत्रः प्रशिष्यश्च। अयं हि सोदरपुरकुलप्रसूतात् 'संख्यापरिमाण' नाम्नो निबन्धस्य निर्मातुः केशवमिश्रात् 'तर्कभाषा' नाम्नो न्यायग्रन्थस्य रचयितुः केशवमिश्राच्च भिन्नः पञ्चदशशतेशवीयाब्दस्योत्तरार्धेऽवस्थितस्य द्वितीयवाचस्पतेः पौत्रतया तत्समकालिकश्च। अस्य 'परिवारसमौलिकुलोत्पन्नद्वितीयवाचस्पति-मिश्रपौत्रत्वं छन्दोगानां सोदरपुरमूलकमैथिलब्राह्मणानां छान्दोग्यश्राद्धादि-प्रक्रियाया एव परिशिष्टेऽस्मिन् नियतमुद्धरणं चाश्रित्य पण्डितश्रीदुर्गाधरझामहोदयेन प्रस्तुतसम्पादनभूमिकायां परिशिष्टप्रणेतुः श्रीकेशवमिश्रस्य 'संख्यापरिमाण' प्रणेतुः सोदरपुरकुलोत्पन्नात् केशवमिश्राद् भिन्नत्वं किञ्चिद् विप्रतिपद्यमानतां नीतम्। एतद्विषयेऽधिकमन्नु वता मयैतावदेव वक्तुं शक्यते यत् परिशिष्टकर्ता केशवमिश्रः 'संख्यापरिमाण' कर्तुः केशवमिश्राद् भिन्न इति वचनं तयोर्जन्म-कुलभेदस्य विस्पष्टं श्रवणात् सर्वथा समीचीनमेव। परिशिष्टे स्वकीयाया वाजसनेयि-शाखायाः श्राद्धादिप्रक्रिया अनुद्धृत्य छान्दोग्यश्राद्धादिप्रक्रियाया एवोद्धरणन्तु तत्र विप्रतिपत्तेरुद्भावने नालम्, निबन्धकाराणां स्वपरभावोपेक्षयैव प्रयोजनानुसारेण धर्मस्वरूपनिरूपणार्थं नूतननिबन्धरचनासु प्रवर्तनात्। प्रकृतग्रन्थः परिशिष्टरूपः, परिशिष्टस्य च पूरकतया पूरणीय एवार्थे प्रवर्तनमुचितम्। तदानीं च छान्दोग्य-श्राद्धादिप्रक्रियायामेव पूरणमावश्यकं न तु स्वशाखीयायां तस्याम्। अत एव प्रकृते निबन्धे छान्दोग्यश्राद्धादिप्रक्रियाया एवोद्धरणं विवेचनं च कृतं स्वकीयायाश्च तस्या न कृतमित्येतत्कल्पनस्य सम्भवाच्च।

निबन्धोऽयमनतिप्राचीनत्वेऽपि कुतश्चित्कारणाद् विश्लिष्टतां गतस्तत्प्रणेतुः शिष्येण श्रीकल्याणशर्मणा सपरिश्रमं सुश्लिष्टीकृत्य 'सुश्लिष्टपरिशिष्ट' इति नवेन नाम्ना पुनर्व्यवहार्यतां नीतः। स एष मिथिलायां धर्मस्य दायभागस्य च निर्णये प्रमाणतया सुदीर्घकालं सबहुमानं परिगृह्यमाण आसीत्।

एष द्वैतपरिशिष्टनामा निबन्धग्रन्थो वक्ष्यमाणेषु प्रकरणेषु विततः।

(१) व्यवहारप्रकरणम्
(२) अशौचप्रकरणम्

(३) सापिण्ड्यप्रकरणम्

(४) वपनप्रकरणम्

(५) अनध्यायप्रकरणम्

(६) उपनयनप्रकरणम्

(७) समयाशुद्धिप्रकरणम्

(८) विवाह्यकन्याप्रकरणम्

(९) दक्षिणादानप्रकरणम्

(१०) षोडशमहादानप्रकरणम्

(११) कुण्डनिर्माणप्रकरणम्

(१२) व्रतप्रकरणम्

(१३) शतभिषस्नाननिषेधप्रकरणम्

(१४) स्नानप्रकरणम्

(१५) कुशादानप्रकरणम्

(१६) तर्पणप्रकरणम्

(१७) देवपूजाप्रकरणम्

(१८) पुष्पावचयनप्रकरणम्

(१९) पञ्चमहायज्ञप्रकरणम्

(२०) प्रत्यक्षलवणभक्षणादिनिषेधप्रकरणम्

(२१) नवान्नश्राद्धप्रकरणम्

(२२) श्राद्धप्रकरणम्

(२३) मलमासप्रकरणम्

(२४) तिथिद्वैतप्रकरणम्

(२५) ग्रहणप्रकरणम्

(२५) वाराणसीसीमाप्रकरणम्

एषु प्रकरणेषु सापिण्ड्यप्रकरणे व्यवहारप्रकरणांशस्य, विवाह्यकन्याप्रकरण उत्तराङ्गतया नामद्वैतस्य, दक्षिणादानप्रकरणे सापिण्ड्यप्रकरणांशस्य, श्राद्धप्रकरणेऽङ्गभावेन अपरपक्षश्राद्धप्रकरणस्य आभ्युदयिकश्राद्धप्रकरणस्य चोल्लेखः प्राप्यते। प्रकरणेषु प्रकृतानां विषयाणां सम्बद्धनिबन्धेषु पूरणार्हतया प्रतीयमानोंऽशः सम्यङ् निरूपितोऽस्ति।

प्रकृतग्रन्थो 'द्वैतपरिशिष्ट' नाम्ना व्यवह्रियते। नाम्ना प्रतीयते यद् 'द्वैत' नामा आसीत् कश्चिन्निबन्धग्रन्थस्तस्य पूरकतया प्रणीतत्वेनैष 'द्वैतपरिशिष्ट' नाम्ना समकेति। परं 'द्वैत' नाम्ना कश्चन निबन्धः प्रामाणिकीं प्रतीतिं नाधुनावधि लब्धः। नाम्नेदमपि कल्पयितुं शक्यते यद् 'द्वैतं' नाम कश्चन धर्मशास्त्रीयो विषयः, तस्य पूरणीयभागप्रतिपादकतया ग्रन्थोऽयं 'द्वैतपरिशिष्ट' इत्यभिधानं प्रापत्। परं 'द्वैत' नामा कश्चनोल्लेखनीयो धर्मशास्त्रविषयो न प्रसिद्धिमाश्रयते। अतोऽस्य नाम्नो द्वैतघटितत्वे हेतुं विमृशतेदमेव तावन्निर्धारयितुं शक्यते, यद् 'व्यवहारो हि धर्मशास्त्रस्य मुख्यविषयेषु मूर्धन्यः। स च लौकिकव्यवहारक्षेत्रे शास्त्रीये विचारक्षेत्रे चोभयविधेऽपि विवादे प्रवर्तते। प्रथमे क्षेत्रेऽर्थिप्रत्यर्थिद्वैतं, साक्षिणो, निर्णायको राजादिः, द्वितीयक्षेत्रे वादिप्रतिवादिनौ, मध्यस्था, निर्णायकः सभाऽध्यक्षश्चापेक्ष्यन्ते। उत्थितस्य विवादस्योपशमनाय धर्मशास्त्रे निरूपितो व्यवहार आश्रीयते। व्यवहारस्योपयोगितां महत्तां धर्मशास्त्रीयविषयेषु मुख्यतामाकलय्यैव प्रकृते निबन्धग्रन्थे तस्य सर्वप्रथमं सन्निवेशः। तस्यार्थिप्रत्यर्थिभावाश्रयेणैव प्रवर्तमानतया ग्रन्थारम्भे माङ्गलिकपद्ये 'अर्थिप्रत्यर्थिभावः शिवशिवशिवयोः श्रेयसे नः सदाऽस्तु' इत्येवं ससम्भ्रमं तस्योल्लेखः। स चार्थिप्रत्यर्थिनोः द्वैतेन निर्वाह्यः। तदाश्रितो व्यवहारश्च भाषानिर्णयात्मनोश्चतुष्पादस्य व्यवहारस्यादिमचरमपादयोर्द्वैताश्रितः, सम्प्रतिपत्तिषु च भाषानिर्णययोः द्वयोरेव निष्पत्त्या निर्वर्तनीयश्च। यथोक्तमत्रैव ग्रन्थे व्यवहार-प्रकरणे—

'स चायं व्यवहारश्चतुष्पात्, तत्राह बृहस्पतिः—

पूर्वपक्ष आद्यपादो द्वितीयश्चोत्तरो मतः।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः॥

तथा—

मिथ्योक्तौ स चतुष्पादः प्रत्यवस्कन्दने तथा।
प्राङ्न्याये स तु विज्ञेयो द्विपात्सम्प्रतिपत्तिषु॥

तदेवं निजाद्यप्रतिपाद्यस्य व्यवहारस्य प्रवर्तकयोरर्थिप्रत्यर्थिनोः, आद्यान्त्य-पादयोः सम्प्रतिपत्तौ तत्पूर्णतानिर्वाहकयोर्द्वैततैव व्यवहारप्रधानप्रतिपाद्यकस्य ग्रन्थस्यास्य नाम्नो द्वैतघटितत्वे हेतुः प्रतिभाति।

यथा तथा वा भवतु, मयाऽत्रैतावदेव वक्तव्यमस्ति, यदयं ग्रन्थो मिथिला-जनपदस्य विशिष्टेषु धर्मशास्त्रीयनिबन्धग्रन्थेष्वन्यतमस्तत्र बहु समादृतश्च।

अस्य विषयाः प्रायः समग्रे भारते ज्ञातव्याः सम्पूर्णायाश्च धार्मिकजनताया उपादेयाः। ग्रन्थस्य रचना भाषायाः, प्रतिपादनपद्धतेः, विषयगम्भीर्यस्य सन्दब्धस्य तर्कबहुलविचारजातस्य च दृष्ट्या रमणीया श्रेष्ठा च। अतो वाराणसेयसंस्कृतविश्व-विद्यालयेन तस्य मुद्रणप्रकाशनाभ्यां मे महान् प्रमोदः। अस्य ग्रन्थस्य पुनर्विद्वत्सौ-लभ्यसम्पादकाः प्रथमोपकुलपतयः सहृदयमूर्धन्याः विद्वत्प्रियाः विद्वांसः श्रीमन्त आदित्यनाथझामहोदयाः, आद्याः गवेषणालयसञ्चालकाः पण्डितप्रवराः श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायाः प्रस्तुतसम्पादनकर्तारः पण्डितश्रीदुर्गाधरझामहोदयाश्च नूनं धन्यवादार्हाः।

प्रकृते सम्पादने या काचन त्रुटिः, सा तस्य विच्छिद्य विच्छिद्य प्रवर्तमानतया पुनश्च कथंचिल्लक्ष्यपूर्तिकत्वाभिप्रायं प्राप्ततया च प्राप्तास्पदेति न तत्र चर्चार्हः कश्चन सम्पादकापराधः।

मन्येऽध्ययनमननार्होऽयं निबन्धो विपश्चितां पुनर्दृष्टिगोचरो भवन् तैः सोत्साहं परिशील्यमानस्तेषां मनस्तर्पणं नूनं विदध्यादिति।

वाराणसेयसंस्कृतविश्वविद्यालयः
वाराणसी।
मार्गशीर्षपूर्णिमा, २०२७ वै० सं०

**बदरीनाथ शुक्लः**
अनुसन्धानसञ्चालकः,
दि० १२-१२-७०

# भूमिका

विदितमेवैद्विदुषां यद् वेदमूलकानां शास्त्राणां व्याकरण-ज्योतिष-दर्शनादि विविध प्रस्थानेष्वेकं प्रस्थानम् 'धर्मशास्त्रम्' इति । धर्मं शास्ति' इति व्युत्पत्त्या निष्पन्नोऽयं 'धर्मशास्त्र' शब्दः स्वार्थनिर्णयाय 'धर्मं' शब्दस्य निष्पत्तिरपेक्षते। अतस्तन्निर्णयाय निरूप्यते किंचिद् 'धर्म' शब्दमधिकृत्य ।

'धर्म' शब्दस्य द्विविधोऽर्थः प्रयुज्यते लोकैः । एको महर्षिजैमिनिसम्मतः 'चोदनालक्षणोऽर्थो धर्मः' इत्येत्सूत्रोपलक्षितः दान-यागादिक्रियाकलापस्वरूपः। अपरश्च न्यायवैशेषिकाद्यभिमतः आत्मनिष्ठः दानयागादिविहितक्रियाजन्यातिशय-रूपः पुण्यशब्दस्याप्यभिधेयः । प्रकृते 'धर्मशास्त्र' शब्दघटकोऽयं 'धर्म' शब्दः प्रथमोक्तधर्मलक्षणमेव स्वप्रवृत्तिनिमित्तमनुगच्छति। यतो मानवस्य जननमारभ्य मरणान्ताः सर्वाः क्रिया एव विधिनिषेधकोटौ कक्षीकृत्यात्र विवेचिताः। स्मृति-वचनैर्निष्पन्नानां विधिनिषेधवाक्यानां स्वरूपाणि च मनुसंहितायां मेधातिथिभाष्ये तत्तंस्थलेषु स्फुटतरमुपपादितानि ।

ननु धर्मशास्त्रग्रन्थेऽर्थकामावपि सम्यक्तयैव निरूपितौ, यथा 'सप्तवित्तागमा धर्म्याः' इत्यादि । 'यथाकामी भवद्वापि' इत्यादि च । किन्तु तयोः रागादेव प्राप्तया 'विधिरत्यमप्राप्तौ' इत्येद्विधिलक्षणस्याभावेन कथं तत्रार्थकामौ निरूपिताविति चेत् ? श्रूयतामवधानेन ।

केवलरागतः प्राप्ते धर्मनिरपेक्षेऽर्थोपार्ज्जने बलवन्तं पुरुषं निर्बलं प्रसह्यापि तदीयार्थहरणे नियुज्येत । ततो लोक व्यवहारः समाजव्यवस्था च भज्येत। मात्स्य न्यायश्च प्रचुरतया प्रचलेत् ।

अत एवोक्तं भगवता मनुना—

सर्वेषामेव शोचानामर्थशौचं विशिष्यते ।
योऽर्थशुचिः, स शुचिः, न मृद्वारिशुचिः शुचिः ।। इति ।।

अत एव रागतश्चौर्यादिना विक्रयजयादिना च प्राप्तमर्थार्जनोपायं परिसंख्यया नियमेन च निषिद्धोपायेन धनमुपार्जयन्तं पुरुषं प्रति दण्डविधानेन दानविक्रयादि-धर्म्येष्वेवोपायेषु व्यवस्थापयति धर्मशास्त्रम्। एतदभिप्रायेणैव धर्मशास्त्रे दायभागोऽपि

प्रचुरतया निरूपितो महर्षिभिः। प्रपञ्चितैतद् भाष्यकारैर्निबन्धकारैश्च। एवमेव रागप्राप्तस्य मैथुनापरपर्यायकामस्यापि यादृच्छिकतां परिहृत्य ऋतावेव, स्वभार्यायामेव, एकादश्यादिपर्वदिनभिन्नदिवसेष्वेव परिसंख्याप्य नियमयति :—

'षोडशस्तुनिशाः स्त्रीणां तासां युग्मासु संविशेत्' इत्यादिना।

धर्मशास्त्रग्रन्थाश्च ( १ ) सूत्र—( २ ) संहिता—( ३ )—भाष्य ( ४ )—निबन्ध भेदेन चतुर्धा विभक्ताः सन्ति। तेषु गौतमधर्मसूत्रादयः सूत्रात्मकाः, मनुयाज्ञवल्क्यादीनाञ्च स्मृतयः संहितारूपाः, मेधातिथिभाष्य-अपरार्क्क-मिताक्षरादयश्च भाष्यात्मकाः, चतुर्वर्गचिन्तामणि-कृत्यकल्पतरु-निर्णयसिन्धु-कृत्यचिन्तामणि-कृत्यरत्नाकरादयश्च निबन्धरूपाः देशभेदकालभेदमधिकृत्य निर्मिताः, अधुनापि निर्मिममाणा अगणिताः सन्ति। तेष्वेव न्यायमीमांसानुगविचारबहुलो विविधविषयनिर्णायकोऽयं "सुश्लिष्टपरिशिष्ट" शब्देनापि प्रसिद्धो 'द्वैतपरिशिष्टाख्यः' धर्मशास्त्रीयोऽयं निबन्धग्रन्थः।

नातिप्राचीनोऽप्ययं द्वैतपरिशिष्टाख्यो ग्रन्थः कुतश्चित् करणात् मध्ये विश्लिष्टतां प्राप्तः ( प्रायः तदीयशिष्येण ) विद्वद्वरेण कल्याणशर्मणा 'सुश्लिष्टीकृतः' इति 'सुश्लिष्टपरिशिष्ट' शब्देनैव लोकैः व्यवहृयते कैश्चदेव 'द्वैतपरिशिष्टेति' मूलनाम्ना। प्रयत्नतोऽन्विष्टोऽपि वर्त्तमानसुश्लिष्टपरिशिष्टस्याधारभूतो मौलो द्वैतपरिशिष्टाख्यः कोऽप्यपरो ग्रन्थो नैवोपलब्धः। अतो विद्वद्भिर्विचारणीयमिदंमन्वेषणीयञ्च यत् केशवमिश्रकृतो मूलभूतः द्वैतपरिशिष्टः किं स्वरूपक आसीदिति ? का च विश्लिष्टता तत्र कल्याणशर्म्मणोपलब्धा, यस्याः परिहारस्तेन तत्र सुश्लिष्टता संपादनेन कृत इति च।

मिथिलाया जनसमाजे यथाऽस्य ग्रन्थस्य धर्मानुष्ठानविषये प्रामाण्यमासीत्तथैव दायभागादिनिर्णयार्थं विचारालयेऽपि प्रामाण्यमसंवाद्यासीदिति पटनास्थोच्चन्यायालयीयभूतपूर्वप्रधानविचारपतीनां तत्र भवतां श्री लक्ष्मीकान्त झा शर्म्मणां आङ्लभाषामयान्निबन्धादवम्यते।[1]

---

१. Kesava Misra:—Kesava Misra, grandson of Vachaspati, compiled two Nibandhas entitled Dwaita Parishista which was edited by his student Kalyana Misra and is known as Suslishta Parishista and the other entitled Sankhya Parimanam which deals with Achara or rules of conduct. In the latter, the author describes himself as a "Parishada" in the

प्रस्तुतद्वैतपरिशिष्टाख्यनिबन्धस्य रचयितारः केशवमिश्राः द्वितीयवाचस्पति-मिश्राणां पौत्राः प्रशिष्याश्च 'पलिवार समौलि' इत्याख्ये मैथिलब्राह्मणकुले समुत्पन्ना नाम्ना समयेन च कियदंशेन 'संख्यापरिमाणादि' निर्मातृभ्यः केशव मिश्रेभ्योऽभिन्न-तया प्रतीयमाना अपि वस्तुतो भिन्ना एव। यतः 'संख्यापरिमाणस्यादौ स्फुटतर-मिदमुपलभ्यतेः—

उमापतिसगर्भस्य श्रीविश्वधरजन्मनः।
श्रीमत्केशवमिश्रस्य कृतिर्विजयते तराम् ॥
तीरभुक्तिमहीपालपरिषन्मुख्यसूरिणा । इति

संख्यापरिमाणस्यैवान्ते समाप्तिसूचिकापुष्पिकाया इदं स्वरूपं दृश्यते :—

'इति महामहोपाध्याय कटकावासी-सोदपुरकमलदिवाकर-मिश्र-श्री केशव कृतसंख्यापरिमाणपुस्तकं समाप्तम्' इति।

अतः पलिवारसमौलिकुलोत्पन्नस्य म० म० द्वितीयवाचस्पतिमिश्रस्य पौत्रः (प्रशिष्योऽपि) केशव मिश्रः, सोदरपुरकुलसमुत्पन्नः संख्यापरिमाणाख्यनिबन्ध-रचयिता केशव मिश्रश्चनाभिन्नो भवितुमर्हतीति प्राहुराधुनिकप्रत्नतत्त्वविचक्षणा मैथिलविद्वांसः।

---

court of the Mithila King but he does not mention the name of the King whom he served In the former, the author makes a passing reference to the fact that even a father can be taken in adoption as a Kartaputra in Mithila. This is suggested owing to the fact that Sraddha performed by the sons is of greater efficacy than that performed by the wife and also to the fact that the widow of the deceased is thus saved from coming out to the cremation ground and to the place where Sraddha has to be performed.

Dwaita Parishistha has been judicially recognised as an authority on the Mithila school.

यत्र पितैव भ्रात्रादिर्वा पुत्रः कृतस्तत्रापि पितृत्वेनैव निर्देशो न तु पुत्र-भ्रातृत्वादिना, उभयोरपि सन्निहितप्रोषितत्वादिति (पृ० १२३ पं० १५)।

**Patna Law College Golden Jubilee Commemoration Volume, Studies In Law, Page No. 421**

किन्तु ते इदमपि निपुणं निभालयन्तु यत् पलिवारमूलकाः मैथिलब्राह्मणा बाजसनेयिन एव भवन्ति, सोदरपुरमूलकाश्च छन्दोगा एव। प्रस्तुतद्वैतपरिशिष्टाख्ये निबन्धे उदाहरणतया छान्दोग्या एव श्राद्धादिप्रकिया नियमेनोद्धृताः विचारिताश्च, न कदाचिदपि बाजसनेयिनः प्रक्रियाः अनवधानेऽप्यत्रोद्धृताः। किमिदं स्वाभाविकं यत् कोऽपि ग्रन्थकारः श्राद्धादिप्रक्रियाविचारावसरे स्वशाखीयां प्रक्रियां यत्नतः परिहृत्य, नियमतः परशाखीयामेव प्रक्रियां समुदाहरेत् ? इति।

तर्कभाषाप्रणेतुः केशव मिश्रादप्ययं केशवमिश्रो भिन्न एव, तर्कभाषायाः वर्द्धमानकृतटीकायाः रुचिदत्तकृत तट्टीकायाश्च (अलवरपुस्तकालये समुपलब्धचरायाः)' विद्वांसो द्वादशशताब्द्याः मध्यभाग एव वर्द्धमानस्य समयं निश्चन्वति। म० म० द्वितीयवाचस्पतिमिश्रस्य समयः पञ्चदशशताब्दस्य उत्तरार्द्ध एव विदुषां सम्मतः। अतस्तर्कभाषाप्रणेतुः केशवमिश्रस्य द्वैतपरिशिष्टाख्यप्रस्तुतनिबन्धविधातृकेशवमिश्रयोः समुपलभ्यमानमिदं समयवैषम्यं तयोरेकत्वं दूरे निक्षपति।

बाल्यावस्थात एव धर्मशास्त्रीयविचारावसरे द्वैतपरिशिष्टाख्ये धर्मशास्त्रीयनिबन्धग्रन्थे पूज्यपितृचरणानां निरतशयमादरं मया दृष्टमासीत्। कालक्रमेण यत्किञ्चिद्व्युत्पत्तौ जातायां स्वयमप्यस्य ग्रन्थस्य समादरणीयता प्रत्यक्षीकृता। अत्रागत्य तच्छ्रद्धावशीभूतेन मया तदानीन्तना अस्यानुसन्धानविभागस्य प्रथमाध्यक्षाः पण्डितप्रवराः श्रीक्षेत्रेशचन्द्रदेव शर्माणः बहोः कालात् पूर्वं प्रकाशितमप्यधुनानुपलब्धचरं ग्रन्थमिमं संस्थया पुनः प्रकाशनाय प्रार्थिताः। मद्याच्ञावशीभूतेन तेनास्य ग्रन्थस्य प्रकाशनायाज्ञप्तमिति तेषामधमर्णतां शिरसा वहामि।

वाराणसेय संस्कृतविश्वविद्यालयस्य प्रथमोपकुलपतिमहाभागानामधुना दिल्लीप्रान्तस्योपराज्यपदमलङ्कुर्वाणानां तत्र भवतां विद्यावाचस्पति श्रीमदादित्यनाथ झा महाभागानां कां कामुपकृतिं वर्णयामीति गणयितुमप्यशक्तोऽहमेव 'अस्य ग्रन्थस्य प्रकाशनाय तेषां कियानुद्यम आसीदित्यपि जानामि। किन्तु निजलाभपरिपूर्णानां तादृशमहानुभावानां कृते किमप्यन्यत् कर्त्तुमक्षमोऽहं केवलं श्री १०८ विश्वनाथमेव तदीयसर्वविधसमुन्नत्यै प्रर्थयामीति।

महालयामावास्या
ता० : ३०-९-१९७०

निवेदयति
**दुर्गाधर झा**
वाराणसेयसंस्कृतविश्वविद्यालयतो
लब्धजीविकः

यथास्थानप्रविन्यस्ततत्तत्प्रकरणान्विते ।
परिशिष्टेऽधुनासूचीपत्रमत्रविलिख्यते ॥


| | | | |
|---|---|---|---|
| व्यवहारनिर्णयः | १ | — | १ |
| प्रत्यर्थिविधेयक्रिया | २ | — | २७ |
| व्यवहारचतुष्पात् कथनम् | २ | — | ८ |
| अर्थित्वनिरुक्तिः | २ | — | २० |
| प्रतिज्ञालक्षणम् | २ | — | २२ |
| उत्तरम् | ३ | — | ३ |
| तच्चतुर्विधम् | ३ | — | १६ |
| कारणोत्तरम् | ३ | — | २१ |
| उत्तराभासाः | ३ | — | ३० |
| साक्षिणः | ७ | — | १५ |
| क्रियाभेदाः | ११ | — | २७ |
| साक्षिणः शपथेन जयभङ्गावधारणम् | | | |
| शपथेन तदवधारणम् | १२ | — | १ |
| पुनर्न्यायः | १२ | — | २७ |
| साक्षिश्रावणम् | १३ | — | ६ |
| जयपत्रस्वरूपम् | १६ | — | २७ |
| भोगः | १७ | — | २२ |
| धनिसमक्षं धनदाने···तदीयत्वाभावकथनम् | २१ | — | ४ |
| धर्मादिलक्षणम् | २१ | — | ११ |
| अर्थविवादः | २१ | — | २७ |

| | | | |
|---|---|---|---|
| ऋणलक्षणम् | २१ | — | २९ |
| धनस्त्रीहारिपुत्राणां ऋणशोधनकथनम् | २२ | — | ६ |
| अदेया अष्टधा | २३ | — | २३ |
| दासित्वहेतुः | २४ | — | ५ |
| औरसाभावे दायभागिनः | २७ | — | १४ |
| अनाश्रमित्वनिषेधः | २५ | — | १४ |
| धनग्राहिणः | २७ | — | २० |
| संसृष्टलक्षणम् | २७ | — | |
| अनृतवचने स्थानविशेषे दोषाभावः | २९ | — | २१ |
| अशौचप्रकरणम् | २९ | — | २५ |
| दत्तानारीतिवचनार्थः | २९ | — | २९ |
| मरणादेर्ज्ञातस्याशौचहेतुत्वम् | ३० | — | ४ |
| सूतिकाशुद्धिसमयः | ३० | — | १९ |
| त्र्यहाशौचादिकालात्ययेऽशौचाभावः | ३६ | — | |
| दशाहात्ययेऽशौचभेदाः | ३१ | — | ३ |
| सापिण्ड्यम् | ३७ | — | १२ |
| दिवाकीर्त्यादि स्पर्शे स्नानम् | ३९ | — | २५ |
| पारशवकर्त्तृकपितृतर्पणम् | ४० | — | ५ |
| अशौचसंकरे व्यवस्था | ३१ | — | ४ |
| तर्पणे कुशावश्यकता | ४० | — | १० |
| मरणदिने रात्रिपाकाद्यभावः | ४० | — | १६ |
| सपिण्डनानन्तरं प्रेतपददानविचारः | ४१ | — | ७ |
| क्षत्रियादिना नवमदिने मरणज्ञानेऽन्तिमदिने पिण्डदानम् | ४२ | — | १० |
| पर्णनरदाहविचारः | ४१ | — | १५ |
| अन्येन दाहे कृते दाहकश्राद्धाधिकारिणः पिण्डदानम् | ४१ | — | २० |
| रात्रौ पिण्डदानम् | ४२ | — | २२ |
| रजो योगे पिण्डदानाभावः | ४२ | — | २९ |
| पूर्णिमामुण्डनम् | ४३ | — | ७ |
| तीर्थस्नानम् | | | |
| तीर्थश्राद्धं प्रयागमुण्डनञ्च | ४३ | — | ३४ |

| | | | |
|---|---|---|---|
| विदेशगतानां मृतत्वावधारणसमयः | ४२ | — | १५ |
| प्रयागमरणम् | ४८ | — | ७ |
| अशौचान्तमुण्डनम् | | | |
| प्रोक्षणावोक्षणाभ्युक्षणम् | ५१ | — | १ |
| सन्ध्यागर्जानध्यायः | ५१ | — | ६ |
| अकालवृष्टिः | ५१ | — | २६ |
| सूर्योपरागाद्यनध्यायः | ५३ | — | १ |
| तीर्थश्राद्धस्यावश्यकत्वम् | ४४ | — | ५ |
| विशेषस्थितौ केवलपिण्डदानेऽपि निर्वाहः | ४४ | — | १३ |
| तीर्थे ऽप्रहोपवासः काम्यो न तु नित्यः | ४४ | — | १६ |
| प्रयागे मुण्डनमुपवासश्चेत्युभयमप्यावश्यकम् | ४४ | — | २० |
| तीर्थस्य लक्षणम् | ४४ | — | २६ |
| प्रयागावच्छिन्नगङ्गाभिन्नगङ्गायां मुण्डनं न कार्यम् | | | |
| मकरस्थे रवौ प्रयागे सूर्योदयात्प्रागेव | ४६ | — | २ |
| अरुणोदयवेलाकाले स्नानमावश्यकम् | ४६ | — | १४ |
| प्रयागावच्छिन्न गङ्गायामपि मुण्डनम् | ४७ | — | १५ |
| दशमासाभ्यन्तरे पुनः तीर्थप्राप्तौ तत्र मुण्डनञ्चोपासश्च न पुनः कर्त्तव्यः | ४७ | — | २४ |
| प्रयागमरणे सर्ववर्णानामधिकारः | ४८ | — | ७ |
| समयाशुद्धिः | ५३ | — | ४ |
| सिंहस्थे गुरौ वर्ज्यानि | ५५ | — | ६ |
| गुरोर्महातीचारः | ५४ | — | १२ |
| कन्याया अस्वाजन्यम् | ५७ | — | ३२ |
| नामद्वैतम् | ६० | — | १ |
| त्यागादिस्वरूपम् | ६० | — | २६ |
| दक्षिणावश्यकता | ६१ | — | ७ |
| पुष्करिण्यादौ वारुणादीनामाहुतावावृत्तिः | ६१ | — | १४ |
| गोरवतारणम् | ६१ | — | २२ |
| वैकृतविशेषोपदेशस्य प्राकृतधर्मबाधकत्वम् | ६२ | — | ६ |
| पुष्करिण्यादावग्निसाध्यं कर्म | ६२ | — | ११ |
| ग्रहादिहोमसंख्या | ६२ | — | १७ |

| | | | |
|---|---|---|---|
| ग्रहवेदिः | ६३ | — | १ |
| यजुषि अनुस्वारविकारः | ६३ | — | ४ |
| तडागादि भेदाः | ६३ | — | १० |
| तुलापुरुषदानम् | | | |
| हिरण्यगर्भषोड़शसंस्काराः | ६४ | — | १६ |
| अधिकारि निर्णयः | ६४ | — | १९ |
| ब्रह्मान्ते पलवृद्धिः | ६५ | — | १६ |
| एकाग्नौ कुण्ड दिङ् नियमः | ६५ | — | २१ |
| सामगादेरप्याचार्यत्वम् | | | |
| कल्पवृक्षादावेकाग्निकत्वम् | ६५ | — | ३१ |
| कामधेनौ वत्सद्रव्यमानम् | ६६ | — | १ |
| सर्वकामदमित्यत्राधिकारिकथनम् | ६६ | — | ७ |
| हिरण्याश्वदानम् | ६६ | — | २३ |
| हिरण्याश्वरथस्य चतुरग्निकत्वम् | ६६ | — | २५ |
| क्वचिदेकाग्निर्निषेधः | ६६ | — | २८ |
| अम्लानकुसुमशब्दार्थः | | | |
| षोड़शमहादानप्रकरणम् | ६८ | — | १३ |
| मृगचर्मस्थापनक्रमः | ६८ | — | १७ |
| कुतुपस्य लक्षणम् | ६८ | — | २५ |
| सूक्तपदार्थः | ६९ | — | ११ |
| कुण्डप्रकरणम् | ६९ | — | १९ |
| कृष्णाष्टमी | ७१ | — | १ |
| वास्तुलिखनम् | ७० | — | २३ |
| एकादशी | ७१ | — | १८ |
| प्रथमविवाहस्य संस्कारकत्वम् | ७४ | — | ६ |
| प्रमादनष्टहिरण्यप्रायश्चित्तम् | ७४ | — | १५ |
| सुवर्णत्वजातिः | ७४ | — | २० |
| विवाहे दानवाक्यम् | ७४ | — | २९ |
| स्त्रीणां शतभिषस्नानम् | ७५ | — | २ |
| न स्त्री शूद्राशुचीतिव्याख्या | ७५ | — | १७ |
| दिनविहितशौचापकर्षो रात्रौ | ७५ | — | २३ |

| | | | |
|---|---|---|---|
| दन्तधावनम् | ७५ | — | ३२ |
| स्नाने एकवस्त्रत्वनिषेधः | ७६ | — | २६ |
| शूद्रस्नाने वैदिकमन्त्राभावः | ७७ | — | ६ |
| प्रातर्मध्याह्नस्नाने समन्त्रकता | ७७ | — | १३ |
| स्नाने प्रवाहे सूर्याभिमुखत्वनिषेधः | ७८ | — | २ |
| स्नाने विहितानि | ७८ | — | ६ |
| अशक्तौ स्नानभेदाः | ७८ | — | १२ |
| प्रातः स्नाने जपाद्यधिकारः | ७८ | — | १५ |
| षोढा स्नानम् | ७८ | — | १६ |
| स्वखानिते स्नानादिबाधकम् | ७६ | — | १३ |
| पञ्चपिण्डोद्धारः | ७६ | — | २८ |
| संध्यावन्दनप्रकरणम् | ८० | — | १७ |
| ब्रह्मयज्ञस्वरूपम्, अनाध्याये मानसजपः | ८१ | — | २ |
| दर्भोच्चयसमयः | ८१ | — | ७ |
| त्याज्यकुशाः | ८१ | — | १४ |
| पवित्रलक्षणम् | ८१ | — | २७ |
| जीवत्पितृकतर्पणम् | ८२ | — | ३ |
| देवतर्पणम् | ८३ | — | २१ |
| तत्राञ्जलिनियमः | ८२ | — | ३४ |
| तीर्थप्राप्तौ तर्पणम् | | | |
| स्थलस्थतर्पणे नियमाः | ८३ | — | ३३ |
| तर्पणवाक्यम् | ८४ | — | १७ |
| जले गायत्रीजपविचारः | ८४ | — | २७ |
| तर्पणे मन्त्रान्वयः | ८५ | — | ४ |
| देवपूजा | ८७ | — | १६ |
| पुष्पाणि विहितानि निषिद्धानि च | ८८ | — | २७ |
| पञ्चमहायज्ञाः | ६० | — | १४ |
| मत्स्यमांसयोर्भक्ष्यत्वं भक्षणकालश्च | ६१ | — | १३ |
| प्रत्यक्षलवणनिषेधादि | ६३ | — | ६ |
| कस्तूरीभक्षणनिषेधः | ६३ | — | १८ |
| अशौचे मांसभक्षणनिषेधः | ६३ | — | २० |

| | | | |
|---|---|---|---|
| कृतौ स्त्र्यभिगमने स्नानम् | ९३ | — | ३१ |
| षष्ठिकापार्वणं यवपाकादि | ९४ | ... | ६ |
| श्राद्धानुक्रमः | ९६ | — | १६ |
| श्राद्धे शेषान्नेन वैश्वदेवादि (नित्यश्राद्धलक्षणम्) | १०० | — | ३१ |
| अग्नौकरणहोमापसव्यादि | १०१ | — | ९ |
| एकादश्यादौ श्राद्धशेषान्नाभोजनम् | १०१ | — | ३२ |
| प्रेतैकोद्दिष्टपिण्डादौ अनुशब्दादिमन्त्रविशेषत्यागः | १०२ | — | १३ |
| ऊहविचारः, पञ्चदशमुहूर्त्ताश्च | १०३ | — | २ |
| क्षयाहश्राद्धसमयः | १०३ | — | २० |
| श्राद्धयोग्यकालाः | १०५ | — | १९ |
| श्राद्धे पाकसमयः | १०५ | — | २६ |
| एकभुक्तम् | १०५ | — | ३० |
| श्राद्धे पाकाधिकारी | १०६ | — | ८ |
| पाकपात्रं च | १०६ | — | १५ |
| श्राद्धोत्तरनिषिद्धम् | १०६ | — | १८ |
| अमावास्याश्राद्धकालः | १०७ | — | ३ |
| अमावास्यायां ग्रहणे क्षयाहे कथं श्राद्धमित्यस्य निष्पत्तिः | १०८ | — | ९ |
| कार्तिक्यादौ वृषोत्सर्गे शुद्धसमयापेक्षा | १०८ | — | १३ |
| एकानुष्ठानेनान्यस्य सिद्धिः | १०८ | — | १७ |
| अशौचादिपातितश्राद्धकालः | १०८ | — | २२ |
| क्षतान्तक्रियमाणापरपक्षमृतश्राद्धपार्वणविधानम् | | | |
| एकाहेऽनेकश्राद्धोपपाते प्रथमकर्त्तव्यतानियामकम् | १०९ | — | २५ |
| अशौचान्तपदार्थः | १११ | — | ३० |
| त्रिपक्षादिसपिण्डनतिथिः | ११२ | — | १ |
| मासिकवृद्धिः | ११२ | — | ३५ |
| सच्छूद्रस्याद्यश्राद्धकालः | ११३ | — | १४ |
| वृषोत्सर्गप्रकरणम् | ११४ | — | १ |
| स्त्रीशूद्रयोरमन्त्रकत्वम् | ११५ | — | १० |
| पौराणिकमन्त्रपाठविचारः | ११६ | — | २ |
| सपिण्डनकालाः | ११६ | — | १७ |
| स्त्रीणां पार्वणानधिकारः | ११७ | — | २१ |

| | | | |
|---|---|---|---|
| सपिण्डनश्राद्धविचारः | ११७ | — | २६ |
| चतुर्थीमध्येऽन्यतरमरणे वरकन्ययोरन्यतरस्य श्राद्धेऽधिकारः | ११६ | — | ६ |
| परिणीतायाः द्वितीयाश्रयणे श्राद्धे गोत्रादिनिर्णयः | ११६ | — | १७ |
| दत्तकादौ पितृगोत्रता | १२० | — | १६ |
| पुत्रिकापुत्रकर्तृकसपिण्डनम् | १२० | — | ६ |
| निषिद्धनक्षत्रे सपिण्डनाभावः | १२० | — | १७ |
| सपिण्डने पिण्डोपचारः | १२० | — | ३१ |
| सावनमासनिर्णयः | १२२ | — | २२ |
| स्त्रीणां पृथक् श्राद्धविचारः | १२२ | — | ३० |
| मत्पुत्रत्वकरपदस्य श्राद्धे प्रयोगखण्डनम् | १२३ | — | ४ |
| स्त्रीणां षट्पुरुषतर्पणम् | १२३ | — | १७ |
| स्त्रीणामपि द्विवत्वता | १२३ | — | ३० |
| अहाशौचे त्रिपक्षादौ सपिण्डनम् | | | |
| मासिकापचारः | ११७ | — | २६ |
| द्वादशाह एव सपिण्डनस्य मुख्यः कालः | ११६ | — | २४ |
| मासिकान्नभोजने दोषः | १२१ | — | २६ |
| मत्पुत्रत्वकरीपदसाधनम् | १२३ | — | ३३ |
| एकोद्दिष्टानन्तरं विश्वदेवकर्माचरणम् | १२४ | — | ४ |
| अकृतसपिण्डनस्य एकादशाहानन्तरं पावणेऽधिकारो न त्वाभ्युदयिके | १२४ | — | १२ |
| श्राद्धादौ पशुघातविधिः | १२४ | — | १७ |
| अष्टकायामपूपादीनां प्राधान्यविचारः | १२४ | — | २१ |
| पशोः प्रोक्षणविधिः | | | |
| श्राद्ध देशस्य गुणविधित्वम् | १२५ | — | १२ |
| श्राद्धे त्रिदण्डिपात्रकत्वम् | ११६ | — | २१ |
| अनुपनीतकर्तृकवैदिकमन्त्रेण श्राद्धम् | १२६ | — | २६ |
| शूद्राणां मासि मासि मुण्डनम् सधर्मान्तरं च | १२७ | — | २ |
| पार्वणादौ संकल्पवाक्यविचारः | १२७ | — | १४ |
| सन्यासिकर्तृक श्राद्धे न स्वस्योद्देश्यता | १२७ | — | २६ |
| नित्यश्राद्धनित्यता | | | |
| विश्वदेवश्राद्धस्य नित्यत्वम् | १२८ | — | ६ |

| | | | |
|---|---|---|---|
| अपाश्रकपार्वणे प्रमाणम् | १२८ | — | १७ |
| स्वरित ञित् इति सूत्रार्थविचारः | | | |
| रात्रिश्राद्धादिनिषेधः | १२९ | — | २२ |
| अपरपक्षः | १२९ | — | २८ |
| गजच्छाया | १३१ | — | ६ |
| मघाश्राद्धम् | १३१ | — | ७ |
| गजच्छायादौ भोजननिषेधः | १३१ | — | ११ |
| चतुर्दशीशस्त्रहतश्राद्धम् | १३२ | — | १४ |
| पार्वणलक्षणम् | १३३ | — | ८ |
| नित्यश्राद्धलक्षणम् | १३३ | — | १३ |
| पार्वणाधिकारिणः पुत्राः | १३३ | — | २१ |
| आभ्युदयिकम् | १३४ | — | १ |

अक्रियाया त्रैविध्यम्
श्राद्धाधिकारिणः
औरसे जीवति कृत्रिमादीनां पुत्रत्वकरश्राद्धानर्हता
पुत्राणां ज्येष्ठता
पुत्रित्वातिदेशविचारः
अनूढायाः पूर्वक्रिया
कुमारीमरणे पितृकर्तृकमासिकम्
अविभक्तानां कनिष्ठस्य गयागमनद्वैतम्
पुत्रपदशक्तिविचारः
ज्येष्ठपुत्रस्य सत्त्वे आद्यश्राद्धे कनिष्ठानर्हताविचारः
श्राद्धे निषिद्धदुग्धानि
उभयषट्कप्रसक्तौ मलमासनिर्णयः
हरिशयनतिथिनिर्णयः
सिंहकर्कटयोर्नदीनां रजोदोषः
अशून्यशयनव्रते स्त्रीकर्तृकमन्त्रेऽपि समवेतार्थोहाभावः
तिथिवेधे युग्माद्यादरः
कार्त्तिकामावास्यादयः
महाष्टमीविक्रमदशम्यादिः
कोजागरादिः

माघीसप्तमी अर्द्धोदयः
मन्वन्तरादयः
युगादिः
अवमम् , त्र्यहं च
अथ रविसंक्रान्तिः
तत्पुण्यकालः
ग्रहणपुण्यकालः
अथ पतिव्रताधर्माः
अथ वाराणसीक्षेत्रप्रमाणम्

---

॥ श्रीगणेशाय नमः ॥

# द्वैतपरिशिष्टम्

## श्रीकेशवमिश्रविरचितम्

स्वामिन्[1] वासो ममैतन्नहि नहि, विदितं शीतरश्मिः स वक्रः
स्वर्गङ्गा वेद सा स्त्री भुजगपरिवृढः शोभने ! स द्विजिह्वः ।
स्वीयाङ्गस्पर्शपूर्वं तदिह भगवतैवोच्यतामित्यकस्मा-
दर्थिप्रत्यर्थिभावः शिवशिवशिवयोः श्रेयसे नः सदास्तु ॥

लीलानखाङ्कुरविदारितवैरिवीर-
निर्यत्करक्तबहुगैरिकलिप्तगात्रः ।
स्वस्तीकृतामरवधूगणगीतकीर्ति-
रास्तां हिताय मम कार्पटिको मृगेन्द्रः ॥

अधीत्य सर्वतन्त्राणि निबन्धानवलोक्य च ।
श्रीकेशवेन विदुषा परिशिष्टमिहोच्यते ॥

### तत्रादौ व्यवहार[2]द्वैतनिर्णयः

हारीतः—

प्राङ्न्यायकरणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तो न सा भवेत् ॥

अत्र 'क्रिया' पदं प्राङ्न्यायकरणयोर्यावदर्थकमन्वेति तावदर्थकमेव मिथ्योत्तरेऽप्यनुषज्यते, तेन मिथ्योत्तरे[3]ऽदृष्टमपि प्रमाणम्। अत एवोपलक्षणमपि सङ्गच्छते[4]। भ्रान्तोऽसि ? श्रूयमाणशब्देन पुनरन्वयमात्रमेवानुषङ्गो लाघवात्, न त्वर्थवैषम्यसहितं गौरवात्। अत एव—

न कश्चिदभियोक्तारं पुनर्दिव्ये नियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥

इति याज्ञवल्क्यवाक्येन[5] दिव्यप्राप्तौ पूर्वार्द्धेनाभियोक्तुस्तन्निषेधेनार्थतोऽभियोज्यस्य तद्विधावुत्तरार्द्धेन तन्नियमनात्, सिद्धे सत्यारम्भस्य नियमार्थत्वात्। प्रत्यर्थिनः पापित्वे

---

१. वेदेत्यस्य जानामीत्यर्थः। सा गङ्गा 'स्त्री' स्तनकेशवती। तस्या आधिदैविकमूर्त्तौ चित्रितायां तदुपलम्भात्। शिवशिवेति संबोधनविभक्त्यन्तपदद्वयम्। शिवयोः, अर्थात् पार्वतीशङ्करयोरर्थिप्रत्यर्थिभावानौचित्यात्।

२. व्यवहारनिर्णयः क० पु०।

३. अर्थिन एवं······अधिकः क० पु०।

४. इति······क० पु० पाठः।

५. याज्ञवल्कीयेन······क० पु०।

सन्दिहानत्वे वा कालगर्भायां प्रतिज्ञायां चरमजातस्याज्ञानरूपोत्तरप्रतिरूपके तच्छून्यस्यार्थिन एव, अनन्यगतिकत्वात्, छलस्यावश्यनिरस्यत्वात्। शौचनिश्चययोस्तौल्ये सेच्छस्य,

रुच्या वान्यतरः कुर्यादितरो वर्त्तयेच्छिरः।

इति याज्ञवल्क्यवचनात्। शौचनिश्चययोरिच्छायाश्च तौल्ये प्रत्यर्थिन एव "न कश्चिदभियोक्तारम्" इत्यादिवचनात्। न चोभयसंकोचे गौरवादवश्यसंकोच्यत्वाच्च नियम एव संकोचोऽस्तु ? अनुपपत्तेः, स्वनिर्वाहकमात्रविषयत्वेन नियमापेक्षया क्रियापदसंकोचस्य न्याय्यत्वादिति दिक्। उपलक्षणन्तु प्रकृतपरतयैव नेयमिति न किञ्चिदेतत्।

स चायं व्यवहारश्चतुःपात्, तत्राह बृहस्पतिः—

पूर्वपक्ष आद्यपादो द्वितीयश्चोत्तरो मतः।
क्रियापादस्तथाचान्यश्चतुर्थो निर्णयः स्मृतः॥

तथा

मिथ्योक्तौ स चतुष्पादः प्रत्यवस्कन्दने तथा।
प्राङ्न्याये स तु विज्ञेयो द्विपात्संप्रतिपत्तिषु॥

चतुःपादिति सम्यग्भाषोत्तरे सतीति विशेषणीयम्। तेन यत्र भाषोत्तरानर्हा, तत्रार्थिवचनं निर्णयश्चेति पादद्वयमेव। यत्रोत्तरमाभासरूपं तत्र भाषाप्रत्यर्थिवचननिर्णया इति पादत्रयमेवेति। न च तर्हि सम्प्रतिपत्तावपि भाषोत्तरनिर्णया इति पादत्रयमेवेति वाच्यम्, उत्तरवादिनैव भाषार्थस्याङ्गीकृतत्वेन निर्णेतव्याभावात्, स्ववचनेनैव तस्य पराजितत्वात्, निर्णयकरणरूपायास्तृतीयप्रवृत्ते[1]स्तत्राभावात्। तस्मात् सुष्ठूक्तम् "द्विपात्संप्रतिपत्तिषु" इति।

तत्र पूर्वपक्षो भाषापादः, स चार्थिवाच्यः। अर्थित्वञ्चाधिकपीडावशात्। स च द्रव्यापचाराद्वा, प्रारीप्सितकार्य[2]प्रसङ्गाद्वा, न तु प्रथमनिवेदनमात्रेण। तदाह व्यासः—

यस्य चाभ्यधिका पीडा कार्यं वाप्यधिकं भवेत्।
तस्यार्थिभावो दातव्यो न यः पूर्वं निवेदयेत्॥

बृहस्पतिः—

प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्।
निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः॥
अल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो निराकुलः।
विरोधिकारणैर्मुक्तो विरोधिप्रतिषेधकः॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना।
दद्यात्तत्पक्षसम्बद्धं प्रतिवादी तदोत्तरम्॥

'साध्यम्' साध्यस्य सिद्धयर्हस्य प्रत्याय्यधर्मविशिष्टस्य धर्मिणो वचनम् "पक्षम्" विदुः, तेन स्वमतस्य वचनं पक्षं विदुरित्यर्थः। अतः "त्वं मह्यं हेम्नां शतस्य धारयः, मत्त ऋणत्वेन

---

१. रभावात् क० पु०।

२. भङ्ग क० पु०।

गृहीततावद्धेमकत्वात्" इति भाषाशरीरं सिद्धयति। अत्र 'देहि' इत्यर्थिताभिव्यञ्जकमात्रम्, न तु भाषान्तर्गतमित्यवधेयम्। एवं निर्दोषायां भाषायां सत्यां ज्ञाततदर्थेनोत्तरं देयम्। तदाह बृहस्पतिः—

विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोधिते।
प्रतिज्ञाते स्थिरीभूते लेखयेदुत्तरं ततः॥

नारदः—

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम्।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः॥

पक्षस्य व्यापकं भाषितहेतोराच्छादकम्। यद्यपि संप्रतिपत्तिरज्ञानादिकं चोत्तरं न भाषितहेत्वाच्छादकम्, तथापि तदभिसन्धिना प्रयुक्तमेवेति द्रष्टव्यम्। न चैवमुत्तराभासेऽतिव्याप्तिः? विभाजकोपाध्यवच्छिन्नत्वे सतीति विशेषणात्। अत एव "उत्तीर्यते[1] निस्तीर्यते प्रकृताभियोगोऽनेनेत्युत्तरम्" इति।

नव्यास्तु 'पक्षस्य' प्रतिज्ञातस्य धार्यमाणत्वादेर्व्यापकं साधकमित्याहुः। पक्षस्य धार्यमाणत्वे साध्ये पक्षीकृतस्य व्यापकम्—अभिव्यापकम्। तथा च अर्द्धमत्रागृहीतमर्द्धञ्च परिशोधितमित्यपि मिथ्याकारणघटितमुत्तरं पक्षाभिव्यापकत्वात् संगृह्यत एवेत्यन्ये।

तदेवार्थचातुर्विध्येन विभज्यते कात्यायनः—

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा।
पूर्वन्यायविधिश्चैव उत्तरं स्याच्चतुर्विधम्॥

व्यासः—

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता।
कारणं स्यादवस्कन्दो मिथ्या स्यात् साध्यनिह्नुतिः॥

'साध्यस्य' भाषितस्य सहेतुसाध्यस्य कण्ठतोऽर्थतो वा निह्नवो 'मिथ्योत्तरम्' केवलसाध्यनिह्नवस्तु संप्रतिपत्तिभिन्नेष्वेषु त्रिष्वप्युत्तरेषु समान इति। संप्रतिपत्तावुत्तरे सिद्धसाधनमुखेन पक्षताविघटनद्वारा आश्रयासिद्धिर्नाम हेत्वाभासः स्थापनादोष इति। न चैवं भाषितुरेव पराजयः, विचारस्यास्य तत्त्वनिर्णयार्थत्वात्, तत्र च सिद्धसाधनस्यादोषत्वादिति।

मिथ्योत्तरन्तु, तत्र कात्यायनः—

अभियोगोऽभियुक्तस्य यदि कुर्यादपह्नवम्।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः॥

अभियोगोऽभियोगहेतुर्गृहीतत्वादिः, हेत्वपलाप एव मिथ्योत्तरमिति सारम्।

व्यासः—

मिथ्यैतन्नाभिजानामि मम तत्र न सन्निधिः।
अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधा॥

अत्र मिथ्यैतदिति कण्ठतः 'न जानामि' इत्यादिकं त्रिकमर्थतोऽपह्नवः। अत्र च सहेतुसाध्यापह्नवोक्तिरुत्तरान्तरव्यवच्छेदद्वारा मिथ्योत्तरलक्षणोपयुक्तहेत्वपह्नव एव स्वरूपासिद्धिर्नाम

---

१, क० पु० नास्ति।

स्थापनादोष इति विवेक्तव्यम् । तत्र "गृहीतत्वात् त्वं धारयसि" इति भाषायाम् 'मया न गृहीतम्' इति शब्दतः, कालविशेषगर्भायां तस्याम् 'तदा नाहं जातः' इत्यर्थतः, देशकालविशेषगर्भायां तु तस्याम् 'तदा तत्र नाहमासम्' इत्यर्थतः । देशादिमत्यां तच्छून्यायां वा तस्याम् 'न जानामीत्यर्थत एव' योग्यास्मरणेनार्थतस्तदग्रहणप्रतिपादनात् । अत्र च[1] चरमत्रयं ग्रहणास्कन्दनमुखेन ग्रहणाभावप्रतिपादकम् 'सापदेशमिथ्योत्तरम्' इत्यभिधीयते[2] । आद्यं तु मिथ्योत्तरमात्रम् । 'न जानामि' इति तु सापदेशमिथ्योत्तरमभिमानमात्रात् ।

यत्तु पित्रादिगृहीतत्वभाषायां तद्ग्रहणेऽधिकरणत्वेनाभिमतकालापेक्षया चरमजातस्य तत्पुत्रस्य 'न जानामि' इत्युत्तरं तदुत्तरप्रतिरूपकम्, अर्थतोपस्थापितहेत्वपह्नवासंभवात् । न चैतदुत्तराभावादेव तत्र स्थापकस्य जय इति वाच्यम् ? धर्मव्यवहारे छलस्यावश्यनिरस्यत्वेन तत्र स्थापकेन ग्रहणस्याप्राप्तस्य चावश्यप्रमापणीयत्वादिति ।

कारणोत्तरञ्चापरम् । 'कारणम्' स्थापकस्य[3] साध्यस्य धार्यमाणत्वस्य ध्वंसकारणम्, निर्यातनादि तद्रूपम् । अत एव मिथ्योत्तरादस्य भेदः । तद्धि धार्यमाणत्वस्याभावप्रयोजकमग्रहणरूपम्, न तु ध्वंसकम्, कदाप्यधारितत्वात् । अत एव प्राङ्न्यायादस्य भेदः । प्राङ्न्यायो हि धार्यमाणत्वसामान्याभावज्ञापक इति । न चैवं तयोरत्र साङ्कर्यं स्यात् ? मिथ्योत्तरे गृहीतत्वाभावप्रयुक्तसामान्याभावज्ञापकत्वम्, प्राङ्न्याये च पूर्वजितत्वप्रयुक्तसामान्याभावज्ञापकत्वमतो भेद इति ।

एतच्च त्रिविधम्— ( १ ) पूर्ववाद्युक्तहेत्वपेक्षयाधिकबलम्, ( २ ) समबलम्, ( ३ ) दुर्बलं च । तत्राद्यं प्रत्यवस्कन्दनम्, यदाह[4] बृहस्पतिः—

अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत् ॥

अर्थिनोक्तं गृहीतत्वहेतुं सत्यमभ्युपगम्य यदिदानीमधार्यमाणत्वे परिशोधितत्वादिकं कारणं ब्रूयात् तदा तदुत्तरं प्रत्यस्कन्दनं भवतीत्यर्थः । यथा—'मया त्वत्तः शतं गृहीतमिति सत्यम्, किन्तु परिशोधितम्' इति । इदञ्च "त्वं मह्यमिदानीं शतस्य धारयः, मत्तः प्रतिदेयतया गृहीततावद्धनकत्वात्" इति भाषायां निर्यातनस्थले व्यभिचारवारणाय 'अपरिशोधिते'[5] इति हेतौ विशेषणम् । स्थापकस्य हृदिस्थमुक्तमेव वा तस्य चासिद्धिरुत्तरवाक्यार्थः । तथा च विशेषणासिद्धिपरमिदं कारणोत्तरं स्थापनाहेतावसिद्धो नाम हेत्वाभासो दोष इति ।

कात्यायनः —

अर्थिनाऽभिहितो योऽर्थः प्रत्यर्थी यदि तं तदा ।
प्रपद्य कारणं ब्रूयात् 'आधर्यम्' भृगुरब्रवीत् ॥

आधर्यं दुर्बलत्वम् ।

---

१. क० पु० नास्ति ।
२. उच्यते, क० पु० ।
३. स्थापकसाध्यस्य क० पु० ।
४. तदाह० क० पु० ।
५. अपरिशोधितत्वम् इति क० पु० ।

प्रदीपकृतस्तु 'कारणम्' धार्यमाणत्वे कारणं गृहीतत्वम्, तत् 'प्रपद्य' अभ्युपेत्य 'ब्रूयात्' परिशोधनादिकमिति शेषः । इत्येवंक्रमेण योजनामर्थादाहुः । अपरिशोधितत्वञ्च स्थापनाहेतुविशेषणं कण्ठरवेण चोक्तमिति चाहुः ।

केचित्तु 'प्रपद्य' स्थापनाहेतुं प्रतीत्य यत्तद्विपरीतवचनं तत्कारणोत्तरमिति तृतीयपरमेवेदं वाक्यमित्याहुः, तन्न; समहीनबलयोः कारणोत्तरयोः स्थापनाधर्माभावेन एतद्वाक्यस्य तदुभयाविषयत्वादिति ।

वस्तुतस्तु 'त्वद्धनं मत्साधारणं मदविभक्तत्वदर्जितत्वात्' इत्यत्र 'नैतदेवं त्वद्विभक्तमदर्जितत्वात्' इत्यत्र बलवत्कारणोत्तरे कण्ठोक्तस्याविभक्तत्वस्य खण्डनात् । साधारणस्वत्वध्वंसस्य चाजननान्न प्राचीनव्याख्या, किन्तु 'प्रपद्य' अभ्युपेत्य भाषितहेतुविशेष्यभागमात्रम् 'कारणम्' अनभियोज्यताप्रयोजकं रूपं विभक्तत्वनिर्यातितत्वादिति यद्ब्रूते तद्बलवत्कारणोत्तरमिति व्याख्या ज्यायसीति ।

समबलन्तु 'मदीयेयं भूः, क्रमागतत्वात्' इति भाषायामिदमेवोत्तरम् । अत्र च सत्प्रतिपक्षो नाम हेत्वाभासो दशाविशेषे[1] स्थापनादोष इति द्रष्टव्यम् ।

दुर्बलन्तु 'विंशतिवर्षादारभ्य ममेयमाधिविषयो भूः, तावत्समयादारभ्य तत्स्वामिना मय्याहितत्वात्' इति भाषायाम् 'पञ्चवर्षादारभ्य[2] पञ्चमेऽब्दे तेनैव मय्याहितत्वात्' इति । अत्रापि सत्प्रतिपक्षो नाम हेत्वाभासः स्थापनादोष इति द्रष्टव्यम् ।

आधौ प्रतिग्रहे क्रीते पूर्वैव बलवत्तरा ।

इति वचनाद् दुर्बलत्वमित्यवसेयम् ।

अत्र च बलवति करणोत्तरे प्रतिवादिनोऽन्ययोस्तु स्थापकस्य प्रमाणमनुसन्धेयम् ।

तदुक्तम्—

गुरावभिहते हेतौ प्रतिवादिक्रिया भवेत् ।
दुर्बले वादिनः प्रोक्ता तुल्ये पूर्वक्रियैव च ।। इति ।

'पूर्वेति' पूर्वोत्तरयोः साक्षिसाम्ये[3] ।

प्राङ्न्यायोत्तरन्तु 'अस्मिन्नर्थे मयाऽयं पूर्वजित, इत्येवंरूपम् । यदाह बृहस्पतिः—

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ।।

'आचारेण' व्यवहारेण, अवसन्नो भग्नो लेखयते भाषाम् । अत्र चोत्तरवादिन एव क्रिया, तेनैव पूर्वजयस्य विभावनीयत्वात् पूर्वलिखितवचनात् । अत्र च बलवत्पूर्वहेतुबाधः स्थापनाहेतुदोषो बाधो नाम हेत्वाभासो हेतुदोष इत्यन्ये[3] । कात्यायनः—

१. सा मदीया, अधिकः क० पु० ।

२. एवम् इत्यधिकः क० पु० ।

३. इति द्रष्टव्यम् । निर्णीतत्वेन संशयाभावादसिद्धिः इत्यधिकः क० पु० ।

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे स्यात् सङ्करात्तदनुत्तरम् ॥

'एकदेशे' एकस्मिन्नेवांशे यदुत्तरं सङ्कीर्यते तदनुत्तरमित्यर्थः । शेषम् 'एकदेश' पदश्चानुवाद इति । तथा हि 'शतं धारयाम्येव, परिशोधितं वा, न गृहीतं वेति 'सङ्करात्' तदनुत्तरमित्यर्थः ।

यत्तु भिन्न-भिन्नावच्छेदेन कारणादिस्पर्शि तत्सदुत्तरमेवेति । अवच्छेदकभेदेन साङ्कर्यस्यैवाभावात् । अत एव हारीतोऽपि—

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं चापि सहानेन तत्र ग्राह्यं किमुत्तरम् ॥
यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।
उत्तरे तत्तु विज्ञेयमसङ्कीर्णमतोऽन्यथा ॥

'यदिति' प्रभूतार्थविषयकमुत्तरांशमादाय विचार उपक्रमणीयः । तुल्यार्थविषयकत्वे तु[1] क्रियाया भुक्त्यादेः फले निर्णयश्च शीघ्रं भवति, तदंशस्यैव प्रमाणं ग्राह्यम् । तदुक्तम्— 'यत्र वा स्यात्क्रियाफलम्' इति । इदञ्चोत्तरमसङ्कीर्णमेव यत्त्वितोऽन्यथा तत् 'सङ्कीर्णम्' हेयमिति ।

पुर[2]राष्ट्रविरुद्धश्च यश्च राजविवर्जितः ।
अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यति ॥

अत्र यथाश्रुतवाक्यबलादनेकव्यवहारविषयमेतदिति केचित्, तन्न—

बहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥

इति पराहतेः ।

न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥

इति वाक्यैकवाक्यताबलादनेकक्रियाव्यवहारविषयमेतदिति परे । तदपि तुच्छम्—

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं चापि सहानेन तत्र ग्राह्यं किमुत्तरम् ॥
यत् प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।

इत्यादिविरोधात् । तस्मादेकावच्छेदेन यत्र विरुद्धाक्षेपस्तद्विषयमेतदिति तत्त्वम् ।

तदयं वर्त्तुलार्थः—"शताभियोगे मुद्राः पञ्चाशत्परिशोधिताः, पञ्चविंशतिर्धार्यन्ते, पंचविंशतिस्तु गृहीता एव न, इत्युत्तरे कारणभाग आदौ विचार्यः, पश्चादपह्नुतः । पञ्चविंशतिरर्थ्यर्थिप्रमाणेन प्रत्यर्थिप्रमाणेन वा बोध्या । न चैवं सति एतद्वचनविरोध एव, न्यायवचनानामुत्सर्गतो न्यायमूलकत्वेनैव लब्धर्थप्रमाणपरिग्रहाबाधकत्वात् । सति निर्णयप्रमाणे

---

१. तु यत्रेति अधिकः क० पु० ।

२. 'पुरराष्ट्रविरुद्धश्च' इत्यत आरभ्य 'तदयं वत्तुलार्थः' एतत्पूर्वस्थः पाठः क० पु० [नास्ति]।

च तदंशेऽपि[1] कारणारम्भकसंशयस्यावश्यनिरस्यत्वात् । न च 'यत्प्रभूतार्थविषयम्' [2]इत्यादिवचनादेव लब्धर्थप्रमाणस्याग्राह्यता ? तथा सत्येतत्स्मृतीनां श्रुतिमूलतापत्तेः । न चैतदिष्टमेव ? असन्मूलान्तरत्वस्य तत्र प्रयोजकत्वात्, यूपहस्त्यादिस्मृतौ तथा सिद्धान्तनात् । आसां च न्यायमूलकत्वस्यैव संभवात् ।

मिथ्याकारणसंभेदे ग्राह्यं कारणमुत्तरम् ।

इत्यादिकमपि वचनमेत्रमेव नेयमिति । तस्मात् प्रकरणारम्भकसंशयोऽनुवर्त्तते, निर्णयप्रमाणं च लभ्यते, तावद्विचारणीयमिति परमार्थः ।

ननु—

न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकस्मिन् क्रियाद्वयम् ॥

इति कात्यायनवाक्य एकत्र वादिनोर्द्वयोर्न क्रियाद्वयी, द्वयोश्च न जय इत्यर्थः । तथा च यथोक्तसङ्कीर्णस्योत्तरस्य ग्राह्यत्वे तत्सर्वं प्रसज्येतेति चेन्न; न हीदृशो न्याय एव न भवति, बहुशो दर्शनात् । न चेदृशमुत्तरं न देयम् ? यथाव्यवस्थितोत्तरदानस्य निषेद्धुमशक्यत्वात् । तस्मादेकावच्छेदेनैव प्रकृतवचनार्थत्वादिति ।

## अथ साक्षिणः

तत्र यद्यपि 'साक्षाद्द्रष्टरि संज्ञायाम्' इति पाणिनीयं सूत्रमव्यापकम्, तथापि—

समक्षदर्शनात् साक्षी श्रवणाच्चैव सिद्ध्यति ।

इति मनुवचनात् प्रमितार्थ एव साक्षी भवतीति । तत्रापि—

वचनाद् दोषतो भेदात् स्वयमुक्तिमृतान्तरे ।

इति पर्युदासे ।

मृतान्तरेऽर्थिनि प्रेते मुमूर्षुः श्रावितादृते ।

तेन मुमूर्षुणा धनिकेन यः साक्षी स्वदायादेभ्यः अयमिदं धनं मह्यं धारयति, अयन्तु जानाति' इति श्रावितः, स मृतान्तरोऽपि साक्षी भवत्येव । उभयोरप्युपयुक्ताशेषाभिज्ञतायाः सत्वात् । किन्तु—

योऽर्थः श्रावयितव्यः स्यात् तस्मिन्नसति चार्थिनि ।
क्व तदुत्तरसाक्षित्वमित्यसाक्षी मृतान्तरः ॥

अर्थिना साक्षिणि योऽर्थो विवादविषयीभूतः श्रावयितव्यः, त्वमिममर्थं जानीहि[3] इति तस्मिन् श्रावयितव्येऽर्थे श्रावयितर्यर्थिन्यसति मृते अश्रुतत्वादर्थविशेषस्य 'क्वार्थे साक्षी साक्ष्यं वदतु' इति हेतोर्मृतान्तरो न साक्षी । तेनैतदुक्तं भवति—यस्मिन्नर्थे अर्थिनि प्रेतेऽर्थिपुत्रस्य न संख्यादिज्ञानं विशिष्यास्ति, तत्र साक्षिणस्तत्सत्त्वेऽपि न साक्षित्वम्, सविशेषमनुपन्यासात् । सामान्योपन्यस्तस्यापि तस्य साक्षिणोऽपि न संख्यादौ विशेषे साक्षित्वम्, स्वयमुक्तित्वापत्तेः,

---

१. प्रकरणारम्भक इति क० पु० ।

२. इति वचनबलाद् इति क० पु० ।

३. साक्षी इत्यधिकः क० पु० ।

तस्य च 'स्वयमुक्तिमृतान्तरे' इत्यादिना पर्युदस्तत्वात् । किन्तूभयोरर्थिसाक्षिणोरुपयुक्ताशेषाभिज्ञतायामेव मृतान्तरः साक्षी भवति । अत एव—

य: साक्षी तु दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतम् ।
अन्यं संश्रावयेत् तत्तु विद्यादुत्तरसाक्षिणम् ॥

इत्यत्र मुमूर्षुश्रावितत्वादित्यत्रोभयत्रापि मृतान्तरः साक्षी भवत्येवेति दिक् ।

बृहस्पतिः—

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ तु श्रोत्रियौ ग्राह्यौ नैकः स्यात्तु कदाचन ॥

एकस्तु श्रोत्रियोऽपि न ग्राह्य इत्यर्थः । शंखोऽप्याह—

एकः साक्षी सर्वथा न ग्राह्यः ।

गुणवतोऽप्यग्रहणमिति 'सर्वथा' पदस्यार्थः । एतच्चोभयाननुमतविषयम्, उभयानुमतसत्वे एकोऽपि ग्राह्य एव । अत एव याज्ञवल्क्यः—

उभयानुमतस्साक्षी भवेदेकोऽपि धर्मवित् । इति ।

'धर्मवित्' इति सकलसाक्षिगुणोपलक्षणम् । नारदोऽप्याह—

उभयानुमतो यः स्याद् द्वयोर्विवदमानयोः ।
भवत्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि ॥

उभयानुमत इति उभयानुमतिविषय इत्यर्थः, न तु उभयानुमतियोग्यः, उपलक्षणतापत्तेः । योग्यतालक्षकत्वे चानुमतपदमनर्थकमेव स्यात्, 'धर्मवित्' पदादेवानुमतियोग्यस्य प्राप्तत्वादिति[1] । एकस्य साक्षित्वे अभिमतगुणसंप्रतिपत्त्युभयानुमती मिलिते तन्त्रम्, आहितः पूत आहवनीयो भवतीतिवत् । यत्तु भिन्न एव तन्त्रम्, तेन निर्गुणस्यापि सदोषस्याप्युभयानुमतस्यैकस्य साक्षित्वमेवेति, तन्न, एवमर्थभेदाद् वाक्यभेदापत्तेरिति ।

निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्यमागतः ।
न ब्रूयादक्षरसमं न तं निगदितं भवेत् ॥

अत्र 'त्वं मह्यमिदानीं शतस्य धारयः, एष च तद्वेद' इत्युपदिष्टः । साक्षी यत्र द्रव्यं निगदति न संख्यां तत्र द्रव्यांशे निगदनिरस्तसंशयमपहायानिर्णीते संशयांशे वादिशपथेन निर्णय इति केचित्, तन्न; प्रमाणद्वयप्रवृत्तिगौरवापत्तेः, 'न चैकस्य क्रियाद्वयम्' इत्यस्य विरोधापत्तेश्च, किन्तूभयत्रापि द्रव्यांशे च वादिशपथेनैव निर्णयो लाघवादिति ।

न्यूनमभ्यधिकं वापि प्रब्रूयुर्यत्र साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः ॥

अत्रेदमाकूतम् । वादिना शतमाक्षिप्तेन तावदधिकाभिधानं साक्षिणः प्रमाणावगतसार्धशतग्रहणमूलमिति वक्तुं शक्यते । आदराभ्यासातिशयो हि स्मृतिमूलसंस्काराधायकः[2] । तेनार्थी न स्मरति, साक्षी च स्मरत्यधिकमिति नोपपन्नम् । तेनान्यथानुपपत्त्येदमवगम्यते यत् 'अयं

---

१. दिक् इत्यधिकः क० पु० ।
२. स चार्थिन्येव युज्यते, न तु साक्षिणः इत्यधिकः पाठः क० पु० ।

ग्रहणस्वरूपं जानात्येव, संख्यादौ भ्रान्तः' इति मूलभूतवादिवाक्यविरोधादवसीयते। न हि[1] भ्रान्तिमूलमभिधानमन्यतरप्रज्ञासत्यत्वे प्रमाणम्। ननु भवत्वेवमधिकाभिधाने, न्यूनाभिधाने तु कथम्? उत्तरवादिकथितशतग्रहणस्य साक्ष्यभिहितपञ्चाशद्ग्रहणेऽपि सत्यत्वात्, कथं न तस्य विजय इति। अत्रोच्यते, नात्रोत्तरवादिनः शतसंख्यारूपे तात्पर्यम्, तथा सति "विशेषनिषेधप्रतिज्ञायाः शेषाभ्यनुज्ञा-फलकत्वात्' इति न्यायेनोनशतसंख्यावच्छिन्नग्रहणस्वीकारप्रसङ्गात्, किन्तु 'शतं मया न गृहीतम्' इत्यस्यायमर्थो यत् 'तस्मिन् देशादौ मयाऽस्य न किमपि गृहीतम्' इति पञ्चाशद्ग्रहणाभिधानेऽपि नान्यतरप्रतिज्ञासत्यत्वमिति साधूक्तम्—'तदप्यनुक्तम्' इति।

सर्वत्र चार्थसंशयप्रशमनार्थं दिव्यादिना क्रियान्तरेण निर्णय इति उक्तस्यापि सन्देहा-नपाकरणेन फलतोऽनुक्तत्वात्, अतो नैतावता जयपराजयावधारणम्, किन्तु क्रियान्तरेणेति वाक्यार्थः। तदुक्तम्—'न तं निगदितं भवेत्' इति भवदेवादयः।

वस्तुतस्तु साक्षिणा संख्यानभिधाने अधिकाभिधाने च सकलप्रतिज्ञायामेव क्रियान्तरेण निर्णयः। संख्यायां भ्रान्तस्य तस्य द्रव्येऽपि भ्रमसंभवात्। तन्निगदस्यैवानुपादेयत्वात्। न्यूनाभिधाने पञ्चाशद्ग्रहणस्य भ्रान्त्यादिमूलकत्वेन शङ्काबीजाभावेन तदतिरिक्ताभिधाने तु विस्मरणस्यापि शङ्कितत्वात्, छलादेरवश्यनिरसनीयत्वात् पञ्चाशद्ग्रहण[2] आदीयत एव, विरोधाद्यभावात्। कथं तर्हि साक्षिणां तत्र सप्ताहनिरूपणम्? संवादायेति ब्रूमः। न चात्राप्यनुक्तत्वातिदेशान्मानान्तरानुसरणम्, तथा हि अवधारणैव वा? तदुत्तरं वा? नाद्यो वैयर्थ्यात्। नान्त्योऽपि, 'प्रमाणफलकं तथा' इत्यादिपराहतत्वात्। तस्मात् साक्ष्यभिहिता-तिरिक्ते प्रमाणान्तरानुसरणमित्येत्र रमणीयम्। यत्र तु साक्ष्यभिहितेऽप्यप्रामाण्यशंका जायते तत्रोभयत्रापि प्रमाणान्तरानुसरणमेवेति दिक्। यत्तु—

अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना।
विभावितैकदेशेन देयं तदभियुज्यते॥ इति॥

तत्

अनेकार्थाभियोगे तु यावत्संसाधयेद्धनी।
साक्षिभिस्तावदेवासौ लभते साधि तद्धनम्॥

इति वचनविरोधेन व्याप्तैकदेशविषयम्। अथवा 'सपणश्चेद्विवादः' इति पणविषय-मित्यग्रे स्फुटीभविष्यति।

साध्यांशे निगदिते साक्षिभिः सकलं भवेत्।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्तितम्॥

एवं पृष्टः साक्षी यदा प्रतिज्ञातार्थं न ब्रूते, किन्तु तद्व्याप्यम्, तत्रापि तन्निगादकस्य वादिनो जय एव, तदभिधानोपस्थापितानुमानेन वादिप्रतिज्ञातार्थस्य प्रमितत्वात्। न च 'यस्योचुः साक्षिणः सत्यां प्रतिज्ञाम्' इति श्रुतेः साक्षिणा तदभिधानान्न तथेति वाच्यम्, एवत्स्मृतेन्यार्य-

---

१. न च इति क० पु०।
२. निगद इत्यधिकः क० पु०।

मूलकत्वात् । साक्षिपदस्य प्रमाणोपलक्षकतया केनापि प्रमाणेन यत्प्रतिज्ञातोऽर्थः प्रमितः स जयी भवेदित्येवं परत्वात् ।

अथ

यस्याशेषं परिज्ञातं साक्षिभिः परिवर्णितम् ।
स जयी स्यादन्यथा तु साध्यार्थं न समापयेत् ॥

इत्यत्र 'अन्यथा' शब्देनाशेषप्रतिज्ञातार्थप्रतिपादनाभावोऽभिधीयते । स चाभिधानेनानपेक्षिताभिधानेन वोभयथापि संभवति । तत्रान्त्यश्चतुर्धा भवति-(१) न्यूनाभिधानेन, (२) अधिकाभिधानेन, (३) अज्ञानाभिधानेन, (४) विरुद्धपक्षाभिधानेन वा । अत्र सर्वत्र प्रकारपञ्चकेऽपि साध्यसिद्धिरिष्टैव, किन्त्वनभिधानेऽज्ञानाभिधाने वा शपथेनैव निर्णयः । एषामन्यतमाभावे 'दिव्यान्याहुर्विशोधनम्' इत्यादेः, न तु तावतैव भङ्गो व्यवह्रियते ।

ये तु तावतैव तत्रोभयत्रापि भङ्ग इति वदन्ति ते भ्रान्ताः, विचारारम्भकसंशयस्यानिवृत्तेरनभिधानस्याज्ञानाभिधानस्य वा जयभङ्गयोरविशेषात्, तत्त्वनिर्णयस्यावश्यकर्त्तव्यत्वाच्च । किञ्च, न ह्यनुभवः संस्कारमाधत्त एव, नापि संस्कार उद्बुद्धचत एवेति च नियमः, व्यभिचारात् । न्यूनाभिधानेऽधिकाभिधाने वा प्रमाणान्तरानुसरणमेव—

न्यूनमभ्यधिकं वापि प्रब्रूयुर्यत्र साक्षिणः ।

इत्यादिवचनादिति सुव्यक्तमेव । तस्माद्विरुद्धपक्षाभिधाने परं भङ्गः । अत एव—

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवं तस्य पराजयः ॥

इति कण्ठत एव विष्णुरप्याह । तत्र[1] 'अन्यथावादिनः' इति प्रतिज्ञातार्थस्यासत्यत्ववादिन इत्येवार्थः । पूर्वार्द्धे प्रतिज्ञासत्यत्वस्यैवोपस्थितत्वेन 'अन्यथा' पदेन तद्वचतिरेकस्य तदसत्यत्वस्यैवाभिधानात् तथैव व्युत्पत्तेः ।

यत्तु 'वादिनः' इत्यस्य 'अन्यथा' पदस्य च परस्परं नान्वयः, किन्तु विभिद्यैव, तेन यस्य वादिनः साक्षिणोऽन्यथा वदन्ति तस्य पराजय इत्येवार्थ इति, तन्न; अर्थपौनरुक्त्यापत्तेः, अध्याहारे[2] गौरवात्, अध्याहारलक्षणवाक्यभेदापत्तेश्चेति दिक् ।

श्रुतसाक्षी च पृष्टोऽत्र 'अहमिममर्थमश्रौषम्' इत्याह, तत्र नार्थसिद्धिः, शब्दार्थयोर्व्याप्त्यभावात् । किन्तु प्रत्यक्षादिव शब्दादप्यर्थं यत्रावधारयति, तत्राप्रामाण्यशङ्कानालिङ्गितशब्देन यत्र प्रमितार्थमेव निगदति तत्रैवार्थसिद्धिः, तत्सकलङ्के[3] तु न साक्षी, न वा तन्निगद आदेयः, प्रमितार्थत्वाभावादिति दिक् ।

बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणीद्वैधे द्विजोत्तमान् ॥
साक्षिविप्रतिपत्तौ च प्रमाणं बहवो मताः ।
तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये स्मृतिमत्तराः ॥

---

१. तत्र च, इति क० पु० ।

२. अध्याहारगौरवात्, इति क० पु० ।

३. तत्कलङ्के तु, इति क० पु० ।

अत्र द्वैधं साक्ष्यन्तरोक्तव्यतिरेकाभिधायित्वम् । तेन 'न जानामि' इत्यभिधानेऽपि न द्वैधं, तस्य ज्ञानाभावपरत्वेन ज्ञेयास्पर्शात् । विप्रतिपत्तिरपि द्वयोः परस्पराभावाभाव[1] एव । एवञ्च तद्वचनाभ्यामुभयोपस्थितानामन्यतरोपस्थितानां वा परस्परविरुद्धं निगदतां बहूनां गुणिनां वा शुचिनां वा निगदाद्व्यवस्थेति तत्त्वम् ।

उक्तेऽपि साक्षिणः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणावन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥

कूटाः अनादेयनिगदाः । एवञ्च पूर्वसाक्षिणा शपथे कृतेऽपि तत्रोत्तरसाक्षिशपथेनैव सप्ताहाभ्यन्तरे निर्णय इति द्रष्टव्यम् ।

क्रियां बलवतीं त्यक्त्वा दुर्बलां यः समाश्रयेत् ।
स जयेऽवधृते सभ्यैः पुनस्तान्नाप्नुयात् कलाम् ॥

इत्यादिविरोधात् कथं द्विगुणसाक्ष्यादिग्रहणं घटत इति चेत्, एतद्वाक्यस्य 'सजयेऽवधृते सभ्यैः' इति श्रुतेर्जयावधारणानन्तरविषयत्वात् । 'उक्तेऽपि साक्षिभिः साक्ष्ये' एतद्वचनस्य सामान्यमुखस्य जयानवधारणविषयत्वात् । अत एव 'त्यक्त्वा' इति श्रवणादनुपन्यस्तं बलवत्प्रमाणं दुर्बलप्रमाणप्रवृत्युत्तरमुपन्यस्तमपि सप्ताहाभ्यन्तरे संशयदशायां व्यापार्यमेव, बाधकाभावात् । अत एव 'सप्तदिनाभ्यन्तरे बलवत्प्रमाणान्तरस्य ग्रहणम्, तदुपरि तदग्रहणम्' इति चण्डेश्वरेण सिद्धवल्लिखितमिति दिक् ।

निर्णीतव्यवहाराणां प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो भुक्तिः पूर्वमावेदितं न चेत् ॥

'पूर्वमुपन्यस्तं बलवत्प्रमाणं यत् साक्ष्यादिकं[2] दूरत्वादिदोषादव्यापारयितुमशक्यम्, विचारकेणाप्यशक्यत्वभ्रमेणापुरस्कृत्य दुर्बलं प्रमाणमादृतं तत्र सप्ताहोत्तरमपि स्वल्पेऽर्थे बलवत्प्रमाणं व्यापार्य्यमेव 'पूर्वमावेदितं न चेत्' इति 'त्यक्त्वा' इति श्रुतेश्च । न चैवं पूर्ववचनविरोधः ? तेषामुपन्यस्तप्रमाणाविषयत्वात्, एतद्वचनस्य चोपन्यस्तप्रमाणविषयकत्वात् । अत्र च सप्ताहानन्तरमपि पुनर्दर्शनविचारस्याशक्यव्यापारणे बलवत्प्रमाणेऽशक्यव्यापारणत्वभ्रमेण विचारकदोषजम् । अत एव

साक्षिसभ्योपपन्नानां दूषणे दर्शनं पुनः ।

इति कण्ठत एव महर्षिणाप्युक्तत्वादिति दिक् ।

## अथ क्रिया

सदुत्तरे क्रिया देया । सा च द्वेधा । तदाह बृहस्पतिः—

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकानेकधा भिन्ना मुनिभिस्तत्त्ववादिभिः ॥
साक्षिलेखानुमानं च मानुषी त्रिविधा स्मृता ।
घटाद्या धर्मजान्ता च दैविकी नवधा स्मृता ॥

---

१. निगद इत्यधिकः क० पु० ।
२. वादिना, इत्यधिकः क० पु०

अत्र लेखो भोगस्याप्युपलक्षकः। दैविकी च द्वेधा—(१) शपथ—(२) दिव्यभेदात्। तदाह बृहस्पतिः—

सत्यं वाहनमस्त्राणि गोबीजं काञ्चनानि च।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च॥
एते च शपथाः प्रोक्ताः स्वल्पार्थे सुकरास्तथा।
साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम्॥

हलायुधेन तु दिव्यशपथयोरभेद एवोक्तः। तन्मन्दं परिसंख्यानविरोधात्। न च—

अर्थानुरूपाः शपथाः स्मृताः सत्यधटादयः।

इत्यनेन विरोधः? अस्यादृष्टमात्रोपलक्षकत्वात्, अन्यथोभयोपादानानुपपत्तेः। अत्र च क्रिययोरपि सन्निपाते मानुषी क्रिया[1] ग्राह्या। तदाह कात्यायनः—

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम्।
मानुषीं तत्र गृह्णीयान्न तु दैवीं कदाचन॥
यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम्॥

एकदेशव्याप्तापीति स्तुतिः पणविषयंवा, अर्थान्तरविषयं वेति तत्त्वम्।

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु।
लेख्ये सति च वादेषु न स्याद् दिव्यं न साक्षिणः॥

अत्र मिथ्योत्तरे मानुषी क्रिया अर्थिन एव।

मिथ्याक्रिया पूर्ववादे कारणे प्रतिवादिनः।
प्राङ्न्याय-विधिसिद्धौ च जयपत्रं विनिर्दिशेत्॥

'मिथ्या' मिथ्योत्तरे सति पूर्ववादिनः क्रिया मानुषी। 'न गृहीतं मया' इत्यत्र हि 'प्रत्यर्थिनः सा न भवति' इत्यत्र न्यायो मूलम्। अभिशापे त्वभावस्यैव परीक्षणीयत्वान्न विरोधः। तदभावे दैवी। तदाह याज्ञवल्क्यः—

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते॥

सापि मिथ्योत्तरे, कारणोत्तरे तु प्रत्यर्थिन एव—

न कश्चिदभियोक्तारं पुनर्दिव्ये नियोजयेत्।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः॥
प्राङ्न्यायकरणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥

विचारितमेतत्[3] समबलकारणोत्तरे दुर्बलकारणाभिधाने च। पूर्वा क्रिया पूर्ववादिन एवेत्याह—

---

१. क्रियेति क० पु० नास्ति।

२. प्रतिवादिनः क० पु०।

३. विचारिततत्त्वमेतदिति क० पु०।

गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत् ।
दुर्बले वादिनः प्रोक्ता तुल्ये पूर्वक्रियैव हि ॥

नारदः—

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु ।
पूर्ववादी भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥

इदन्तूभयवादिनां सर्वथा साक्षिसाम्ये, अन्यथा निर्देशापत्तेः । न च—

समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत् ।

इति कात्यायनविरोधः ? अन्यतरवादिनः परस्परविरुद्धं निगदतां निगदात् संशयानुच्छेदे तत्राहष्टेन निर्णय इत्यस्य तदर्थत्वात् । वैषम्ये तु बृहस्पतिः—

साक्षिद्वैधे प्रभूतास्तु ग्राह्याः साम्ये गुणाधिकाः ।
गुणिद्वैधे क्रियायुक्तास्तत्साम्ये गुणवत्तराः ॥

प्राङ्न्यायेऽपि प्रतिवादिन एव सर्वाः क्रियाः, तदाह व्यासः—

प्राग्वृत्तवादी विजयं जयपत्रेण भावयेत् । इति ।

नारदः—

राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिर्णये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥

एकस्य भाषार्थस्योत्तरार्थस्य वा निर्णयार्थं गृहीतानां वचनभेदादसाक्षित्वमित्यर्थः । एतच्च साक्षिणां सर्वथा तौल्ये वचनभेदे द्रष्टव्यम्, अन्यथा—

बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे गुणोत्तमान् ॥

इति मनुवचनविरोधापत्तेः । न चेदं साक्ष्युपादानपरम् 'परिगृह्णीयात्' इति वचनाद् न तद्वचनप्रामाण्यपरमिति वाच्यम्, परिग्रहानर्थक्यापत्तेः । नापि वादिनोरेव साक्षिद्वैधे सतीदम्, एकस्यापि वादिनः साक्षिभेदेऽर्थस्यासंकोचेन जागरूकत्वात् । याज्ञवल्क्योऽप्याह—

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥

न चेदं वचनं मनुवचनविरोधात् परिग्रहपरम्, निर्बीजलक्षणापत्तेः । अथ—

साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम् ।
तेषामेकोऽन्यथावादी भेदात् सर्वेऽप्यसाक्षिणः ॥

इति कात्यायनवचनेन एकस्याप्यन्यथावादे सर्वेषामसाक्ष्यमुच्यत इति विरोध इति चेन्न, त्रयाणां साक्षिणां मध्ये एकस्याप्यन्यथावादेऽपरस्य तच्छून्यस्य सत्प्रतिपक्षितया तृतीयस्य[1] चैकतया तत्र साक्षितो न निर्णय इति कात्यायनतात्पर्यात् । सत्प्रतिपक्षिता-

---

१. एकतया, इति क० पु० ।

वशिष्टानां[२] त्वनेकत्वे तत एव निर्णय इति याज्ञवल्क्यतात्पर्यात्, इति कात्यायनवचनस्यास्य स्वमूलभूतन्यायविरोधेनावश्यसंकोच्यत्वादिति। साक्षिशपथाधिकारे नारदः—

यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमश्च सः॥

रोगास्तु—

ज्वरातीसारविस्फोट-गूढास्थिपरिपीडनम्।
नेत्ररुग् गलरोगश्च तथोन्मादश्च जायते॥
शिरोरुग् भुजभङ्गश्च दैविका व्याधयो नृणाम्।

इत्येते ग्राह्याः। रोगादिकं घोरमिह ग्राह्यम्। अत्र सर्वत्र ज्ञातिपदं सपिण्डपरम्, तथैव वृद्धव्यवहारात्। ब्राह्मे—

सपिण्डता तु कन्यानां सवर्णानां त्रिपूरुषी।

तेनादत्तकन्यानामशौचे शपथे वा एषैव सपिण्डता ग्राह्या। या तु सपिण्डता सप्तमी पर्यन्तं सा विवाहादौ। अत एव "सप्तमीपर्यन्तं मातृसपिण्डा सा चाविवाह्या" इति रत्नाकरादौ व्यक्तम्।

वादिशपथे कात्यायनः—

आ चतुर्दशकादह्नो यस्य नो राजदैवकम्।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः॥

'व्यसनम्' आपत्। 'घोरम्' अतिपीडाकरम्। कोशाधिकारे विष्णुः—

यस्य दृश्येत सप्ताहाद् द्विसप्ताहादथापि वा।
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा॥
तमशुद्धं विजानीयात् तथा शुद्धं विपर्यये।

पितामहः—

त्रिरात्रात् सप्तरात्राद्वा द्विसप्ताहादथापि वा।
वैकृतं यस्य दृश्येत पापकृत् स तु मानवः॥
तस्यैकस्य न सर्वस्य जनस्य यदि तद् भवेत्।
रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावना॥

कात्यायनः—

अथ देवविसंवादस्त्रिसप्ताहात्तु दापयेत्।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च॥
तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत्।
रोगोऽग्निर्ज्ञातिमरणमृणं दद्याद् दमं च सः॥

दैवविसंवादो रोगज्ञातिमरणादिः । 'तस्यैकस्य' इति, न तु देशव्यापको मरणादिः, किन्तु शपथानन्तरजन्मा अभियुक्तस्यासाधारणो रोगादिर्भङ्गलिङ्गमित्यर्थः । अत्र यद्यपि नानावाक्ये कालविकल्पः श्रूयते, तथापि शपथे सर्वत्र द्विसप्ताहान्वय एव । अत एव शपथाधिकारे नारदोऽपि[1]—

ऊर्ध्वं यस्य द्विसप्ताहाद् वैकृतं सुमहद् भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥

हलायुधेन तु वर्णानुक्रमेण त्रिरात्रादिव्यवस्था उक्ता । पारिजाते तु कोश एव यस्य देवस्य स्नपनोदकं पीतं तत्प्रचुरता तारतम्येन त्रिरात्रादिव्यवस्थोक्ता । प्रदीपकृता तु देशकालापेक्षया विकल्प उक्तः । संप्रदायमार्गमनुसरता च मया नारदवचनानुरोधेन च कोश एव वर्णानुक्रमेण कालविकल्पः स्वीकृतः । नारदः—

अनेकार्थाभियोगे तु सर्वार्थंव्यपलापिना ।
विभावितैकदेशेन देयं तदभियुज्यते ॥

येषामर्थानां मिथोऽविनाभावस्तद्विषयमेतत्, न्यायमूलकत्वात् । यद्वा 'एकदेशविभावनेऽपि सर्वं दद्याम्' इति पणविषयम्, अन्यथा अदृष्टार्थकतापत्तेः । अत एव याज्ञवल्क्योऽपि—

सपणश्चेद्विवादः स्यात् तत्र हीनं प्रदापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥ इति ।

मनुः—

तीरितं चानुशिष्टं च तत्र क्वचन यद्भवेत् ।
कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्त्तते ॥

'तीरितम्' इति 'तीर पारसमाप्तौ' इत्यस्य चौरादिकस्य निष्ठायां रूपम् । तेन निर्णीय समर्पितमित्यर्थः । 'अनुशिष्टम्' साक्षिभिरुक्तम् । 'यत्र क्वचन' ग्रामादिसभायाम् । नारदः—

साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्वचर्यावसितानां च नास्ति पौनर्भवो विधिः ॥

इदमत्राकूतम् । अदुष्टसाक्षिसभ्यादिभिर्यद्धर्मतो विचारितम्, तद्वादीच्छामात्रेण द्विगुणदण्डमास्थायापि न विचारणीयम्, मनुविरोधादनवस्थापत्तेश्च । किन्तु यन्निर्णीतमपि साक्षिसभ्यादिदुर्लक्षणमुद्भाव्य पराजितो वादी न स्वीकरोति, किन्तु पुनर्विचारमर्थयते, तत्र द्विगुणदण्डमास्थाय दूषणमेवापाततो विचारणीयम् । सिद्धे तु दूषणे द्विगुणं दण्डं तिरस्कृत्य पुनस्तत्त्वतो विचार एव प्रवर्त्तनीयः । पूर्वविचारस्य सम्यक्त्वशङ्कायामेव पुनर्विचारः । तत्रापि पराजितस्यादौ द्विगुणदण्डस्वीकारः । ततो विचारप्रवृत्तौ स्वोक्तस्य साक्ष्यादिदूषणम्[2], तेन पूरणे साक्ष्यादिमात्रदण्डो विवादपदस्य पुनर्विचारणं च । अपूरणे तु तेन पराजितस्यैव दण्डः, न तु विचारान्तरमपीति ।

---

१. नारदः, इति क० पु० ।
२. साक्ष्यादिदूषणस्येति क० पु०

तदुक्तं याज्ञवल्क्येन—

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान् नयेद् नृपः।
सभ्याः सजयिनो दण्ड्या विवादाद् द्विगुणं दमम्॥

नारदोऽप्याह—

तीरितं चानुशिष्टं च यो मन्येत विधर्मतः।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्॥
असाक्षिकं तु यद्दृष्टं विमार्गेण च तीरितम्।
असम्मतमतैर्दृष्टं पुनर्दर्शनमर्हति॥

पितामहः—

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्।
साक्षिभिर्लिखितेनाथ भुक्त्वा वा तान् प्रसाधयेत्॥

'इदन्तु साक्ष्यादीनां प्रायिकतया तदादरणार्थम्, तदभावे दिव्यमपि कार्यम्, अन्यथा सन्देहतादवस्थ्यात्।

यस्मिन् यस्मिन् विवादे तु साक्षिणां नास्ति संभवः।
साहसेषु च सर्वेषु सर्वदिव्यानि दापयेत्॥

कात्यायनः—

समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत्।
प्राणान्तिकविवादे च विद्यमानेषु साक्षिषु॥

यद्यपि साक्षिणां विशेषविधिनैव विशेषनिषेधः, तथापि 'स्तेनाः साहसिकाः' इत्यादिः कण्ठतोऽपि तन्निषेधो निरर्थकः, तेन विहितालाभेऽविहितनिषिद्धा उपादेया[1] इति द्रष्टव्यम्। एतच्च साक्षिपरीक्षणम् ऋणादिषु, न तु साहसादौ। यदाह कात्यायनः—

ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु।
साहसात्ययिके चैव न परीक्षा क्वचिन्मता॥ इति।

साक्षिश्रवणे मनुनारदौ—

अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते॥

## जयपत्रलक्षणम्

जयपत्रलक्षणे कात्यायनः—

अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक् तथा।
निर्णयश्च तथा तस्य यथा वाऽवधृतं स्वयम्॥
एतद्यथाक्षरं लेख्यं यथापूर्वं निवेशयेत्।

---

१. निषिद्धास्तु नोपादेयाः, इत्यधिकः क० पु०

बृहस्पतिः—

सद्वृत्तं व्यवहारात्तु पूर्वपक्षोत्तरादिकम्।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत्॥
पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते॥

वशिष्ठः—

प्राड्विवाकादिमुद्राङ्कं मुद्रितं राजमुद्रया।

तथा—

निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना।
पश्चात्कारो भवेत्तत्र न सर्वत्र विधीयते॥

निरस्तेति। साक्षिशपथादिरूपा 'क्रिया' 'प्रमाणेन' अनुमानादिना पश्चात्क्रियत इति पश्चात्कारो जयपत्रम्। यत्र वादिवाक्यपर्यालोचनया जयावधारणम्, तत्रैव जयपत्रम्, न तु साक्षिनिगदार्थिप्रत्यर्थिशपथादिना जयावधारणेऽपि, 'न सर्वासु क्रियासु' इति वचनादिति केचित्, तन्न; पूर्वजयविभावनस्यापि कृत्यत्वे सर्वत्रैव जयपत्रस्य न्यायतः सिद्धेः। कथं तर्हि 'न सर्वासु' इति वचनम्? 'यादृशं जयपत्रं प्रत्याकलितस्थले न तादृशं प्रमाणेन जयावधारणस्थले' इत्यत्रैव तात्पर्यात्। एतच्च जयपत्रलिखनं निरूपणस्य सम्यक्त्वप्रदर्शनार्थम्। भाषोत्तरलेखनं च हेत्वन्तरेण पुनर्न्यायप्रत्यवस्थाननिरासार्थम्। प्रमाणलिखनं च पुनः प्रमाणनिरासार्थम्। अत एव—

यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गणाः।
निर्णीतव्यवहाराणां प्रमाणमफलं तथा॥

इति दिक्

## अथ भोगः

सागमो दीर्घकालश्च निश्चितोऽन्यवलोज्झितः।
प्रत्यर्थिसंनिधानं च पञ्चाङ्गो भोग इष्यते॥

प्रमाणमिति शेषः। ननु [1]सागमत्वविशेषणमत्र व्यर्थम्, तत्र तद्भोगस्यापि प्रामाण्यात्।

अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः।
न तच्छक्यमपाकर्त्तुं क्रमात् त्रिपुरुषागतम्॥
यद्विनागममत्यन्तं भुक्तं पूर्वतरैस्त्रिभिः।
न तच्छक्यमपाकर्त्तुं क्रमात् त्रिपुरुषागतम्॥
वर्षाणि विंशतिं भुक्त्वा स्वामिना व्याहृता सती।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी॥
त्रिपुरुषी च त्रिगुणा न तत्रापेक्ष्य आगमः।

---

१, सागमत्वम् क० पु०।

एवञ्च त्रिपुरुषभोग आगमनिरपेक्ष एव प्रमाणमिति, न—

सागमेनोपभोगेन[1] भुक्तं सम्यग्यदा भवेत् ।
आहर्त्ता लभते तत्र नापहार्यन्तु तत्क्वचित् ॥
आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥
अनागमन्तु यो भुंक्ते बहून्यब्दशतानि तु ।
चौरदण्डेन तं पापं दण्डयेदवनीपतिः ॥

ननु तर्हि साधक-बाधकमानसद्भावात् संशय एवास्तु ? उच्यते, पूर्वेषां वचनानामागम-सन्देहविषयत्वेनोत्तरेषां तदभावनिश्चयमालम्ब्य प्रवृत्तत्वेन विषयभेदेनाविरोधात् । एवञ्च त्रिपुरुषभोगस्थल आगमसन्देहेऽपि भोगः प्रमाणम्, अयत्र त्वागमसहितनिश्चय एव । आगमव्यतिरेकनिश्चये तु शतवार्षिकोऽपि भोगो न प्रमाणमिति सिद्धम् ।

पश्यतोऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥
अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥

नन्वेतेषां वचनानां विरोधेन षष्टिवर्षभुक्तेः प्रामाण्योक्त्या त्रिंशद्वार्षिको विंशतिवार्षिको वा भोगो न प्रमाणम्, अर्थतस्तयोः प्रामाण्यनिषेधादिति चेन्न[2], विषयभेदेनाविरोधात् । तथा हि-'पश्यतोऽब्रुवतः' इत्यभिधानाद्यत्र विरुद्धं वाङ्मात्रमपि नास्ति, तत्र विंशतिवार्षिको भोग एव प्रमाणम् । 'त्रिंशद्वर्षाण्यविच्छिना' इत्यत्र अविघातिनीतिश्रुतेर्विघातपदार्थस्य कलहताडनादेरेव निषेधात् । वाङ्मात्रविप्रतिपत्तौ सत्यामपि त्रिंशद्वार्षिको भोगः प्रमाणमिति । एवञ्च 'अव्याहता सती' इति श्रुतेः कलहताडनादिषु सत्स्वपि षष्टिवार्षिको भोगो भूस्वत्वे प्रमाणमिति । गवादौ तु नीरवो दशवार्षिको भोगः प्रमाणम्, वचनात् ।

अत्र केचित् न ह्युक्तवचनं भोक्तुः स्वत्वे प्रमाणम्, व्याप्तेरभावात् । किन्तु भोक्तुस्वा-मिनस्य पार्श्वे वक्तद्वचनाद् गोभूम्यादिस्वामिना तद्भोगस्वामिना तद्भोगसम्बन्धेन धनं लभ्यत इत्यत्र प्रमाणम् ।

भुज्यमानान् परेणार्थान् यस्तान् मोहादुपेक्षते ।
समक्षं पश्यतोऽप्यस्य तान् भुक्तिः कुरुतेव शम् ॥ इति

अन्ये तु आधेरनुपभोगेन यत्रासिद्धिस्तद्विषयकमिदं वचनम् । यत्राधिग्रहीत्रा भूम्यादिक-माहितं न भुज्यते किन्त्वाधिकर्त्रैव चिरं भुक्त्वाऽन्यत्राधीयते । तत्रोत्तरस्याधिग्रहीतुः तद्भूम्यादौ प्रभुत्वम्, न तु प्रथमस्य । तथा च यद्यपि 'आधौ प्रतिग्रहे क्रीते पूर्वैव बलवत्तरा' इत्यादिकं

---

१. आगमस्तु आ सम्यग् गम्यते स्वीक्रियते स आगमः क्रयादिरिति व्यवहारमातृका । आगमः सादिपत्रादिरिति दीपकलिका । आगमो धनोपार्जनोपायः क्रयादिरिति मैथिलाः ।

२. चेदिति क० पु० नास्ति ।

वचनमप्यस्ति, तथापि तदपवादकं 'पश्यतोऽब्रुवतः, इति वचनम्। तथा चापवादकबलात् द्वितीयस्यैवाधिः सिद्ध्यति

यद्वा 'हानि' पदमेवोपेक्षितुः पक्षे विचारकस्य न्यूनकोटिकः संशयो भवतीत्येवं परं न तद्भङ्ग एव। तथा सति 'हानिमन्तरेण पुनर्दर्शनम्, हीनस्य गृह्यते वादः' इत्यादि-वचनसिद्धं न घटते। तस्मात्तादृशहानिमतोऽन्यस्य पुनर्विचारेणैव निर्णयः कार्यः, अत एव—

उपेक्षिता यथा धेनुर्विना पालेन नश्यति।
पश्यतोऽन्यैस्तथा भुक्ता भूमिः पालेन हीयते॥
वर्षाणि विंशतिर्यस्य भूमिर्भुक्ता परैरिह॥
सति राज्ञि समर्थस्य तस्य सेह न सिद्ध्यति॥

इत्यत्र पश्यन्तमानादृत्य या यस्य भूमिः परैर्भुज्यते सा तस्य हीयते तदीयत्वेन निश्चीयत इति। किं च यदि विंशतिवार्षिको भोगः स्वत एव स्वत्वे प्रमाणं तदा तत एव साध्यसिद्धौ—

शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते।
वर्षाणि विंशतिं यावत् पत्रं दोषविवर्जितम्॥

इति वचनेन यद्भोगस्य लेख्यदोषनिराकरणार्थत्वमुक्तं तद्व्याहन्येत।

वस्तुतस्तु हानिबोधकस्मृतीनां प्रमाणपरिपालनकर्त्तव्यताविधिशेषत्वमेव, अत एव हानिवचनानि लिखित्वा कल्पतरौ प्रमाणपरिपालनमुपसंहृतमिति।

तथा

आगमोऽपि बलं नैव भुक्तिस्तोकापि यत्र नो।
अनागमन्तु यो भुंक्ते बहून्यब्दशतानि तु।

एवञ्च एतद्वचनयोः पर्यालोचनया सागमा भुक्तिः स्वत्वे प्रमाणम्, न त्वागमव्यतिरेक-निश्चयेऽपि भोगः प्रमाणं परस्परव्यभिचारात्। किञ्च सर्वैरेव स्वत्वनिषेधात्।

एवञ्च आगमसन्देहे भोगस्य प्रामाण्ये व्यर्थविशेषणतेति चेत्, न, 'इदमिदानीं मम स्वम्' इति हि तावत्साध्यम्। तत्र हि स्वत्वभागे आगमस्य तन्त्रता, तस्य त्विदानीं पर्यन्तमनुवृत्तौ भोगस्य, इति द्वयोः सार्थकत्वात्। न त्वागमव्यतिरेकनिश्चयेऽपि षष्टयब्दिको भोगः प्रमाणमेव। तदुक्तम् "अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः" इतीति चेत्, न—

अनागमन्तु यो भुंक्ते बहून्यब्दशतानि तु।
चौरदण्डेन तं पापं दण्डयेदवनीपतिः॥

इति वचनविरोधात्। किञ्च 'न तच्छक्यमपाकर्त्तुम्' इतिनिर्देशेन त्याजनस्याशक्यतापर-मभिधीयते। 'दण्डयेत्' इत्यत्र दण्ड एवेति विशेषः। अत एव 'अनागमन्तु यो भुंक्ते' इत्यत्र 'सन्तनापेक्षयैकवचनम्' इति व्याचक्षाणेन पारिजातकृता बहून्यब्दशतपर्यन्तमपि पितृ-पुत्रक्रमेण सन्तानेन भुज्यमानेऽपि वस्तुनि भोगात्स्वत्वमनङ्गीकुर्वताऽस्य सुदूरनिरस्तत्वादिति। 'भुक्तिरेव गरीयसी' इत्यत्राल्पकालभुक्तिसाक्षिलेख्येभ्यः 'पञ्चाङ्गसम्पन्ना भुक्तिर्गरीयसी' इत्यर्थः।

इदन्त्विह विचार्यते। उक्तभोगो भोक्तुः स्वत्वजनको वा? स्वत्वप्रमापको वा? तत्र नाद्यः, याजनादिवदस्य स्वत्वजनकत्वेनास्मरणात्। नापि द्वितीयः, तथा हि लिङ्गतया वा

भोक्तुः स्वत्वमसौ प्रमापयेत् ? अनुपपन्नतया वा ? तत्रापि न प्रथमः, ईदृशस्वत्वेन[1] व्याप्तेर्ग्राहकाभावात्, राजादिधने व्यभिचारात् । किञ्चानेन भोगेन प्राचीनस्वत्वस्य स्वत एव प्रमापणे 'अन्यायेनापि यद्भुक्तम्' इत्यादिकं विरुद्धयेत । न हि स्वमन्यायेन भुज्यते । अत एव न द्वितीयोऽपि । किञ्चेयमनुपपन्नता स्त्रीराजादिधनगोचरा नास्ति, यतो न तत्र कदाचिदपि भोगः प्रमाणमिति । तस्मादेवं वाच्यम्, यदयं यथोक्तो भोगः पूर्वस्वामिनो भुक्त्युद्देशेन त्यागात् स्वत्वध्वंसमर्थापयति । न हि संभवति तन्न जहाति परस्य भोगं चेदृशं तत्र वस्तुनि क्षमत इति । किञ्च यद्धि यदुद्देश्येन त्यज्यते तत् तेन परिगृहीतं तस्य स्वीभवति । यथा सर्वभूतोद्देशेन त्यक्तं तोयादीति नियमादिदमपि तत एव भोक्तुःस्वीभवति । राजादिधने तु नैवम्, तत्र त्यागस्यैवासंभवात् । तस्माद् भूम्यादौ विंशतिवार्षिको भोगो गवादौ दशवार्षिक एव पूर्वस्वामिनः स्वत्वध्वंसे प्रमाणमिति यत्कालवैषम्यं भूम्यादेर्महाफलत्वेनातिमहत्त्वास्पदत्वात् । तत्र चिरकालेनैव स्वत्वहानिकल्पनात् । तथा द्रव्यान्तराणां [2]वाऽतथात्वादल्पकालेनापि स्वत्वहानिकल्पनाद्युक्तमुक्तम् । यच्च भूम्यादावेव कालवैषम्येन[3] स्वत्वजननं तदपि वचनबलादेव युक्तम् । यथा तदेव हि जन्म पुत्रस्य पितृधने स्वत्वजनकम्, न तु पुत्र्या इति ।

प्रदीपकृतस्तु यत्र हि "मत्कृत्या नेदानीमत्र फलसंभावना, तदिदानीं पर एव भुक्तां पश्चादेतत्सकाशात् सभोगां भुवं ग्रहीष्यामि" इत्यभिसन्धाय स्वामी क्षमते, तत्र अस्ति विंशत्याब्दिको भोगो न तु स्वामिनस्तदुद्देशेन स्वभूमित्याग इति व्यभिचारान्नायं भोगः पूर्वस्वामिनस्त्यागे प्रमाणम् । न चात्र पूर्वस्वामिना त्यागाभावप्रतिज्ञया दिव्यं कार्यम्, तथा च तद्भङ्गे [4]त्यागागमनिर्णय इति वाच्यम्, तथापि पूर्वभोगसिद्धस्य पूर्वपरिग्रहस्य त्यागावधारण-कालीनत्वेन भोक्तुः स्वत्वाजनकतया तद्वैयर्थ्यात् । चिरभूस्वामी सचेताः किमिति संजह्यात् ? नात्र दृष्टमुद्देश्यं तदभावात् । नाप्यदृष्टम्, धर्मशास्त्र इतिकर्त्तव्यताविरहात् । महेच्छत्वसुशीलत्व-दयालुत्वादिनापि त्यागासम्भवः, 'अत्यजन्नपि तैरैव क्षमते' [5]इत्यस्यासंभवात् । नापि यदुद्देशेन यत्त्यज्यते तत्तस्य 'स्वम्' इति नियमः, उद्देशेनापरिगृहीते व्यभिचारात् ।

अपि च त्यागाद् भोक्तुः स्वत्वम् ? स्वरूपतो वा ? नाद्यः, अदृष्टचरत्वात् । द्वितीये च ज्ञानं भोक्तुः स्वामिवचनादिना स्यात् । तथा च 'त्वदुद्देशेन मयेदं त्यक्तम्' इति तत्स्वामिनस्तद-भिसन्धिपूर्वकाद्वचनात्स्यात् । इदं च दानमेवेति कृतमुपेक्षानुसरणेनेति । न च यथोक्तक्षमयैव त्यागानुमानम्, अत्यक्तेऽपि सौशील्यादिना क्षमासम्भवात् । न चैवं यथोक्तक्षमया भोक्तृ-स्वत्वानुमानमपि स्यात् । पूर्वस्वामिनस्तत्र सत्त्वेऽपि सौशील्यादिना तस्यान्यथासिद्धेरिति वाच्यम्, षष्टयब्दान् यावत् सौशील्यादिना क्षमासंभवेऽपि तादृशभोगस्य भोक्तृस्वत्वप्रमापकं[6] स्मृत्यक्तं

---

१. सह इत्यधिकः क० पु० ।
२. च इति क० पु० ।
३. भोक्तुः इत्यधिकः क० पु० ।
४. त्यागागमनिर्णय इति क० पु० ।
५. इत्यस्यापि इति क० पु० ।
६. प्रमापकत्वमिति क० पु० ।

भज्येत। तस्मात् तादृशो भोगो[1] भोक्तृस्वत्वे प्रमाणम्। तच्च पूर्वागमाद्वोत्पन्नं[2] स्वामिभुक्त्युद्देश्यकतद्वस्तुत्यागाद्वेत्यत्र नाग्रहः।

वस्तुतस्तु वचनबलादेव स्वत्वहानिः स्वत्वोत्पत्तिश्चेति तत्त्वम्।

ऋक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते।
अन्यस्य भुञ्जतः पश्चान्न स तं लब्धुमर्हति॥
पश्यन्नन्यस्य ददतः क्षितिं यो न विचालयेत्।
स्वामी सताऽपि लेख्येन पुनस्तान्न समाप्नुयात्॥

अत्र चैतद्वचनयोः पर्यालोचनया ऋक्थिभिरप्रसिद्धमन्यतमेन समक्षं दत्तं साधारणं धनम्, तथाऽपरैर्वा परकीयं समक्षं दत्तं न निवर्तते 'अप्रतिषिद्धमनुमतं भवति' इति न्यायात्। एवञ्च न्यायतौल्याद् अन्यत्रापि क्रियान्तरेऽप्येषैव गतिरिति द्रष्टव्यम्।

धर्मश्च व्यवहारश्च चरितं राजशासनम्।
चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः॥

अत्र प्रथमस्य लक्षणं परीक्षणं च शपथैः 'स ज्ञेयो धर्मनिर्णयः'। द्वितीयस्य तु—

केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते॥
युक्तियुक्तस्य कार्यस्य दिव्यं यत्र विवर्जितम्।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा॥

अयोग्यदिव्याधीनो निर्णयो बाध्यत इत्यर्थः। तृतीयस्य तु—

देशस्थित्यानुमानेन नैगमानुमतेन च।
क्रियते निर्णयस्तत्र व्यवहारेण बाध्यते॥

'नैगमानुमतेन' अनुमानेन। 'देशस्थित्या' चरिताख्यया, सामान्यमुखशास्त्रानुसारी व्यवहारो बाध्यत इत्यर्थः। चतुर्थस्य तु—

विरुद्धे न्यायतो यत्र चरितं कल्प्यते बुधैः।
एवं तत्र निरस्येत चरितं तु नृपाज्ञया॥

न्यायतो विरुद्धं चरितं राजाज्ञया बाध्यत इत्यर्थः। यद्वा न्याययोः शास्त्रयोर्वा यत्र विरोधस्तत्रापि राजाज्ञयैव व्यवस्थेति दिक्।

विवादे तु नारदः—

स्थानलाभनिमित्तं यद् दानग्रहणमिष्यते।
तत्कुसीदमिति प्रोक्तं तेन वृद्धिः कुसीदिनाम्॥

स्थानमवस्थानं मूलधनस्य, तस्मिन् सत्येव यो लाभस्तन्निमित्तम्। तदर्थं यद्दानं सुवर्णाद्युत्तमर्णस्य ग्रहणमधमर्णस्य तत्कुसीदाख्यमृणमित्यर्थः। इमे दानग्रहणे कर्मव्युत्पन्ने।

---

१. भोक्तुः इत्यधिकः क० पु०।
२. पूर्वागमाद्वोत्पद्यताम् इति क० पु०।

तेनेच्छायां नातिप्रसङ्गः। तथा च धनिकेन तदर्थं प्रयुक्तं धनमधमर्णेन तथाभ्युपेत्य गृहीत-मृणमिति सिद्धयति। उद्धारे तु कलाशून्येऽवश्यापाकरणीयत्वयोगाद् गौणर्णपदप्रयोगः। अवश्यापाकरणीयत्वम्[1] 'जायमानो हि वै ब्राह्मणस्त्रिभिः ऋणैः ऋणवा जायते' इति न्यायचतुर्थाध्याये व्यक्तम्। यस्यैव दानं तस्यैव तज्जातीयस्यैव वा ग्रहणं विवक्षितमतो वाणिज्यार्थं गृहीतस्यापि नर्णत्वमिति दिक्।

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत्।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः॥

व्यसनग्रस्ते द्रविणार्हेऽपि पुत्रे सति धनहार्येव ऋणं दाप्य इति प्रथमखण्डार्थः। तदाह बृहस्पतिः—

ऋणभाग्द्रव्यहारी तु यदि सोपद्रवः सुतः।
स्त्रीहारी तु तथैव स्यादभावे धनहारिणः॥

कात्यायनोऽपि—

ऋणन्तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः।
द्रविणार्हंश्च धूर्यश्च नान्यथा दापयेत्सुतम्॥

तथा

व्यसनाभिप्लुते पुत्रे बाले वा यत्र दृश्यते।
द्रव्यहृद्दापयेत्तत्तु तस्याभावे पुरन्ध्रिहृत्॥

स्त्रीहारिणि धनहारिणि चासति व्यसनादियुक्तोऽपि पुत्र एव पितृणां दाप्य इति तृतीयचरणार्थः। यदाह मनुः—

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः।

धनहार्यभावे योग्यपुत्रे चासति स्त्रीहार्येव ऋणं दाप्य इति चतुर्थचरणार्थः। तदुक्तं नारदेन—

अन्तिमा स्वैरिणीनां तु पुनर्भ्वां प्रथमा तु या।
ऋणं तयोः प्रतिकृतं दद्याद्यस्ते समश्नुते॥

कात्यायनोऽपि

द्रव्यहृद्दापयेतत्तु तस्याभावे पुरन्ध्रिहृत्।

बृहस्पतिरपि

ऋणभाग्द्रव्यहारी तु यदि सोपद्रवः सुतः।
स्त्रीहारी च तथैव स्यादभावे धनहारिणः॥

एवं च धनहारिणि सत्ययोग्यपुत्रस्य स्त्रीहारिणो वा न देयम्।

याज्ञवल्क्यः—

ऋक्थग्राही ऋणं दाप्यो योषिद्ग्राही तथैव च।
पुत्रोऽनन्याश्रितधनः पुत्रहीनस्य ऋक्थिनः॥

---

1. करणीयस्येति क० पु०।

तथा च योग्योऽपि पुत्रान्तरासंक्रान्तधन एव ऋणं दाप्यः, अत एव पितुरधिकारे योऽभिषिच्यते, तां धुरमुद्वहति, तस्यैव तदृणं देयम्, नासंक्रान्तपितृधनस्य पुत्रान्तरस्यापि। 'पुत्रोऽनन्याश्रितधनः' इति श्रुतेः। तथा च धनहारिणि स्त्रीहारिणि च सत्यपि द्रविणार्हे धुर्यश्च पुत्र एव पितुर्ऋणं दद्यात् 'यदि सोपद्रवः सुतः' इति श्रवणात्। अतोऽनीदृशपुत्रसत्त्वे द्रव्यहारी दाप्यः, अनीदृशपुत्रसत्त्वे धनहार्यभावे स्त्रीहारी।

स्त्रीहारी तु तथैव स्यादभावे धनहारिणः।

इति वचनात्। पुत्राणामन्यतमस्य धनहारित्वेऽयोग्योऽपि स एव दाप्यः। 'पुत्रोऽनन्याश्रितधनः' इत्यादेरिति।

कात्यायनः—

यद्दत्तं दत्तशेषं वा देयं पैतामहं तु तत्।
सदोषं व्याहृतं पित्रा नैव देयं ऋणं क्वचित्॥

एतद्वचनबलात् 'न ममैतद्देयम्' इति पित्रा व्याहृतमृणं पुत्रैर्न देयमिति केचित्, तन्न, अनन्यथासिद्धविप्रतिपत्तेरेव गमकत्वादन्यथातिप्रसङ्गात्, स्मृतेर्वेदामूलकतापत्तेश्च। हन्तैवमनारम्भः स्यात्? व्यवहाराभावस्यैव फलत्वादिति।

विभक्ता ह्यविभक्ता वा दायादाः स्थावरे समाः।
एकोऽह्यनीशः सर्वत्र[1] दानाधमनविक्रये॥

अत्र यथाश्रुतशब्दबलाद् विभक्तस्थावरेष्वपि नैकस्य दानादावधिकार इति केचित्, तन्न; बहुतरवचनविरोधात्, किन्तु विभक्तानामपि यत्रांशपरिच्छेदो न जातस्तन्मध्य एक एव तिष्ठति तेन तत्र साधारणत्वमेव, तत्रैकोऽनीशः। पृथग्भूतेषु सर्वेष्वेव द्रव्येषु स्वतन्त्रकृतस्यैव सिद्धिरन्यथानिर्देशापत्तेरितिदिक्[2]।

बृहस्पतिः—

सामान्यपुत्रदाराधिसर्वस्वन्यासयाचितम्।
प्रतिश्रुतं तथान्यस्य न देयन्त्वष्टधा मतम्॥

अत्र च पुत्रदारविमतौ सर्वस्वे चान्वये सति वचनबलाद्दानासिद्धिरिति। वस्तुतस्तु भार्यायां न स्वत्वम्, भार्यात्वेनैव प्राप्तेः। ननु कथं तर्हि हरिश्चन्द्रस्तद्विक्रयमकरोत्? ते हि देवकल्पाः, तेन न किञ्चिदेतत्। स्मृतिसारमते तु सर्वस्वे सान्वयस्यापि दानं सिद्धयत्येव, स्वतन्त्रस्वामिकृतत्वात्। दृष्टस्य स्वत्वस्य क्लृप्तकारणस्य सत्त्वात्, दातुः परं प्रत्यवायो निषिद्धाचरणादिति तन्न भवेदेवं यदि शाब्दो तन्निषेधो न स्यात्। तथा च नारदः—

अन्वाहितं याचितकमाधिः साधारणञ्च यत्।
निक्षेपः पुत्रदारञ्च सर्वस्वं चान्वये सति॥
आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्॥

---

१. सर्वस्येति क० पु०।
२. दिगिति क० पु० नास्ति।

सर्वस्वमन्वयानुमतावपि न देयम्, तत्सस्व[1] एव दाननिषेधादिति केचित्, युक्तं चैतत् प्रतिप्रसवाभावात् ।

विक्रयञ्चैव दानञ्च न [2]देयाः स्युरनिच्छवः ।

इत्यादि कात्यायनेन भार्यापुत्रयोरेव सम्मत्या दानविक्रयोः कथनात् ।

वशिष्ठः शुक्रशोणितसंभवः पुत्रो मातापितृनिमित्तस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः, न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्वेषाम् । न स्त्री दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्त्तुः ।

नारदोऽपि

स्वतन्त्राः सर्व एवैते परतन्त्रेष्वनित्यशः ।
अनुशिष्टो विसर्गे वा विक्रये चेश्वरा मताः ॥

एतद्वचनद्वयम्

सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च न वशित्वं सुते पितुः ॥

तथा

विक्रयञ्चैव दानञ्च न देया स्युरनिच्छवः ।

कात्यायनविरोधात् पुत्रत्वेन दानविक्रयप्रतिपादनपरमिति ऋजवः । वस्तुतस्तु कात्यायनवचनैकवाक्यतया तेषामिच्छयैव संकोचात् । परं पुत्रत्वेन दासत्वेन वोभयथैव दानविक्रयादिः, अन्यथा परस्परविरोधः स्यात् । कथं तर्हि हरिश्चन्द्रस्तद्विक्रयमकरोत् ? देवकल्पत्वात्, अथवा पुत्रदाराणामनुमत्यैव तत्र विक्रय इति ।

एकः पुत्रः स्वदानेऽनुमतोऽपि न देयः । 'स हि सन्तानाय पूर्वेषामि' ति वचनस्वरसात् । भर्त्तुरनुज्ञानेऽपि स्त्रिया न ग्रहणाधिकारः, तदङ्गव्याहृतिहोमबाधात् । अत एव सिद्धान्तः 'स्त्रीशूद्रतिरश्चां यागेऽनधिकारः' इति । ननु "अन्यत्रानुज्ञानाद्भर्त्तु" रित्यविशेषेण श्रवणाद् भर्त्तुरनुज्ञया दानवद् ग्रहणेऽपि स्त्र्यधिकारः, तदङ्गस्य विप्रयुक्तिरपि रथकारवदेव तस्याः कल्प्यत इति चेत् सहत्वेन तस्या अधिकार इष्टिवन्न तु पृथक्त्वेन, बाधसापेक्षविध्यापत्तेरिति ।

नारदः—

विक्रीणीते स्वतन्त्रः स्वमात्मानं यो नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुञ्चते ॥

मार्कण्डेयपुराणे हरिश्चन्द्रवाक्यम्

न स्वामिना विसृष्टोऽपि शूद्रो दास्यात्प्रमुच्यते ।
निसर्गजं हि तत्तस्य कस्तं तस्माद्व्यपोहति ॥

---

१. तत्सस्वमात्रे इति क० पु० ।
२. नेयाः इति क० पु० ।

एवञ्च तद्वचनबलाद्दासानां न दास्यमोक्ष इति केचित्, तदयुक्तम्—

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥

इति नारदवचनैकवाक्यतया 'विना प्रसादात्' इत्यस्य तदर्थत्वात्। हरिश्चन्द्रवचनं तु दासनिन्दापरम्, अन्यथा तस्यैव दास्यमोक्षो नाभविष्यदिति तत्त्वम्। कात्यायनः—

दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात्।
तस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः पतिर्यतः ॥

अत्र दासपदोपस्थापितप्रतियोगिकमेव दासीत्वम्, दासत्वं च पदिन्यायात्। अतोऽस्वामिकाऽन्यस्वामिका वा परिणीता सती वरस्वामिनः स्वीभवतीत्यर्थाद्दासोढत्वमेव पूर्वस्वामिदास्यमोक्षहेतुरुक्तः। अत एवैतत्प्रकरणे वाक्यमिदं लिखितमिति[1] केचित्तन्न, एवं हि चेटिकापरिणये पूर्वस्वामिनः स्वत्वहान्यापत्तेः, स्मृतेर्वेदामूलकतापत्तेश्च[2]। तस्मात्स्वाम्यनुमतिविषय एवैतत्प्रमाणम्। अत एव तदनुमतिप्राप्त्यर्थमेव कन्याशुल्कमपि प्रयच्छन्ति। तथा च तद्विमतिविषये तदपत्यान्यपि पूर्वस्वामिन एव, स्वत्वप्रच्यवहेतोरभावात्।

देवलः—

सर्वे ह्यनौरस्यैते पुत्रदायहराः स्मृताः ॥
औरसे तु[3] समुत्पन्ने ज्यैष्ठ्यं तेषां निवर्त्तते ॥
तेषां सवर्णा ये पुत्रास्तृतीयांशस्य भागिनः।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसंवृताः ॥

वृहस्पतिः—

एक एवौरसः पुत्रो धने स्वामी प्रकीर्त्तितः।
तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्वपरे सुताः ॥

कात्यायनः—

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहरा स्मृताः।
सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः ॥

एवं चैतद्वचनपर्यालोचनेनौरससत्त्वे कृत्रिमादीनां तृतीयांशहरत्वमिति केचित्, तन्न-

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः।
त्रिभागं क्षेत्रजं भुंक्ते चतुर्थं पुत्रिकासुतः ॥

---

१. गौरीव वाटिकाभिधानम् इत्यधिकः क० पु०।

२. तथा च स्वाम्यनुमतौ सत्यामस्वामिकान्यस्वामिका 'दासेनोढात्वदासी या……… दासित्वमाप्नुयात्' इति वचनार्थः, तेनास्वामिकापि पित्रादिस्वामिकैवेति तदनुमत्या परिणीता दास्येव भवति। चेटिकायां तु भोगमात्रेऽनुमतिरित्याशय इत्यधिकः ख० पु०।

३. औरसे पुनरुत्पन्ने, इति क० पु०।

इति ब्रह्मपुराणैकवाक्यतया क्षेत्रजस्यैव तृतीयांशहरत्वसिद्धेः। सवर्णा अपि क्षेत्रजा एव, उक्तयुक्तेः। बहुवचनं तु क्षेत्रजबहुत्वापेक्षया।

नारदः—

पूर्वः पूर्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः।
क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने॥

मनुरप्याह—

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।
शेषाणामानृशस्यार्थं प्रदद्यात्तत्प्रजीवनम्॥ इति।

वस्तुतस्तु तस्मिन् सति कृत्रिमादयोऽपि तृतीयांशहरा एव, बहुवचनानुरोधात्। 'शेषाणाम्' इत्यस्यासवर्णपरत्वात्। 'क्षेत्रजो भुंक्ते' इत्यस्य व्यवच्छेदपरत्वे मानाभावात्। 'क्षेत्रजोऽपि' इत्यस्य तदर्थत्वादिति तत्त्वम्।

बृहस्पतिः—

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः।
पितृव्येनाथवा प्रीत्या स तत्संसृष्ट उच्यते॥

"अस्माकमेकतमस्यापि स्वं सर्वेषामस्माकं स्वम्" इत्यभ्युपगमः संसर्गः। स च व्यवहारादिनाऽनन्यथासिद्धव्यवहारादपि गम्यते। तेषां भूतभाविभवद्धनेष्वैकैकार्जितेष्वपि सर्वेषां स्वत्वानि जायन्ते। अत्र परिसंख्यानबलादेतैरेव धनमेलनमिति केचित्, तन्न, आवृत्तिवाचि 'पुनः' पदस्वरसेन धनमेलनस्यैव लाघवात् संसर्गपदार्थत्वात्। तेन विभागप्रतियोगिना पितृव्यपुत्रादिना संसर्गो लभ्यते। पित्रादिधनग्रहणं प्रपञ्चनमात्रम्। अत एवानास्थायां 'वा' कार इति।

वस्ततस्तु पृथग्धनानां धनमेलनमेव[1] लाघवान्न तु प्राग्विभागे सतीति गौरवात्। वाढम् इति चेत्? न, दृश्यन्ते तथा 'संसृष्टा अपि' इति। बाले तु भागिनि मात्राद्यनुमत्यैव विभागवत्संसर्गोऽपि, व्यवहारबलात्।

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रतिभाव्यमृणं साक्ष्यमविभागे तु न स्मृतम्॥

परस्परविभागात्प्रागित्यर्थः। ननु "जायापत्योर्न विभागो विद्यते" इत्यापस्तम्बसूत्रात्त-[2]द्विभागप्रसङ्ग एव नास्ति, तत्कथमेवमिति चेत्, न, आपस्तम्बवचनस्य विभागप्रकरण आम्ना [तत्वात्] तात्, "पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु च" इति तद्वाक्यशेषात्। अत एव "जायापती अग्नीनादधीयाताम्" इत्यादिनाग्न्याधाने सहाधिकरात्।. तथा 'मेखलया यजमानं दीक्षयति, योक्त्रेण पत्नीम्" तथा "पत्न्याज्यमवेक्षते" "यजमानो वेदं बध्नाति" इत्यादि श्रवणात्। 'त्रेताजन्याग्निसाध्यश्रौतकर्मसु' तथा 'स्मार्त्तकर्म विवाहाग्नौ' इत्यादि स्मरणाज्जायापत्युभयसाध्यविवाहाग्निसाध्येषु स्मार्तकर्मस्वावसथ्यादिहोमादिषु दम्पत्योः सहत्वमधिकारः, 'तदनया सह' इत्यनुरोधात्। तथैव तत्पुण्यफलेष्वपि तयोः साहित्यम्। तत्प्रकरण एव 'दिवि ज्योतिरजरमारभेताम्' इत्यादि गजच्छायायान्तत्फले वा तयोर्न विभागो धनवत्।

---

१. संसर्गः इत्यधिकः क० पु०।
२. तयोर्विभागप्रसङ्गः, इति क० पु०।

विभागस्तु—

यदि कुर्यात् समानांशान्
पत्न्यः कार्याः समांशिकाः।

इति याज्ञवल्क्यवचनात्। ननु पत्न्यधिकरणे ( शावरभाष्य अ० पा० अ० ) पत्न्या अपि पतिधने, स्वत्वमुक्तम्, अन्यास्वपि तर्हि पत्या सह विभागो भवेद्यदि शाब्दस्तन्निषेधो न स्यादिति चेन्न—

अधनास्त्रय एवैते भार्यादासस्तथा सुतः।

इत्यादिना अधनोक्त्वोक्तेः। पत्न्यधिकरणं तु इज्यामात्रे सहत्वेनाधिकारसिद्ध्यै, न त्वधिकरणेन योषिदधनत्वबाधः, तस्य न्यायत्वेन वचनाबाधकत्वात्। अत एव अन्यसाध्येष्विष्टापूर्तेषु न सहत्वेनाधिकारः। तथा च भार्याविरहिणोऽपि तत्राधिकार एव, अनपवादात्। ननु "यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः" इत्येवात्र बाधकमिति चेत् ?, न, पुत्राद्यभावेऽप्यनधिकारापत्तेः। अस्तु तर्हि—

द्वयोरप्यसमक्षं हि भवद्भूतमनर्थकम्।

इत्येव बाधकम् ? अस्योभयसाध्यकर्मपरत्वात्, अन्यथा स्त्रीमात्रस्यापि तत्रानधिकारापत्तेः।

अनाश्रमित्वं गृहभंगकारणाद—
तो गृहाणाश्रममुत्तमं द्विज!
अनाश्रमस्थैरपि वेदपारगै—
रहं न गह्णामि कृतं यदर्चनम्॥

इति नरसिंहपुराणवचनस्य प्रधानतस्तदर्चनपरत्वात्। व्यवहारोऽप्येवमेवेति।

## अथ धनग्राहिणः

तत्र 'गृहिणो धनं पुत्रो लभते, तदभावे पौत्रस्तदभावे प्रपौत्रः, पुत्रः पौत्रः प्रपौत्रो वा' इत्यादिना अमीषां पाठिकक्रमेणैव स्वधाधिकारे सिद्धे तत्समानशीलस्य ऋक्थग्रहणस्यापि तथैवाधिकारसिद्धेः। एवञ्च 'अनपत्यस्य धनं पत्न्यभिगामि' इति विष्णुसूत्रे 'अनपत्यस्य' पुत्रपौत्रप्रपौत्रहीनस्येत्यर्थः। एतेषामभावे साध्वी पत्न्येव लभते।

अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमर्थं लभेत च॥

इति वचनात्। इदं च विभक्तपतिधनपरम्। अविभागे तु—

भ्रातृभार्याणां स्नुषाणां च न्यायप्रवृत्ताना—
मनपत्यानां पिण्डमात्रं गुरुर्दद्यात्, जीर्णानि
वासांस्यविकृतानि।

इति शंखसूत्रादेव व्यवस्था।

पत्न्यभावे दुहिता।
तदभावे दुहितृगामी॥

इति विष्णुसूत्रात्। नारदोऽपि—

पुत्राभावे तु दुहिता तुल्यसंतानकारणात्।
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ॥

यादृशी सा ऋक्थहारिणी तामाह

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता।
कृताऽकृता वाऽपुत्रस्य पितुर्धनहरी तु सा॥
'अपुत्रमृतस्य ऋक्थं गृह्णीयात् तदभावे च'

इति पराशरस्मृतेस्तथैवात्र क्रमः। बालरूपोऽप्येवम्। न चैतत्सर्वं पुत्रिकाविषयमेव, तस्याः पुत्रसत्त्वे[1]ऽपि।

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥

इत्यनेन तुल्यवदेवाधिकारसिद्धेः।

दुहितुरभावे दौहित्रगामि॥

यथा पितृधने स्वाम्यं, तस्याः सत्स्वपि बन्धुषु।
तथैव तत्सुतोऽगीष्टे मातृमातामहे धने॥

इति श्रुतेः। न च दुहितुरभावे एव मातृगामि "तदभावे मातृगामी" इति विष्णुसूत्रात्

भार्यासुताविहीनस्य तनयस्य मृतस्य च।
माता ऋक्थहरी ज्ञेया भ्राता वा तदनुज्ञया॥

इति बृहस्पतिवचनाच्च तथैवात्र क्रमसिद्धेरिति वाच्यम्

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।

इति याज्ञवल्क्यवचने 'च' कारश्रुतेः। किं च लिखितवाक्येन दौहित्राधिकारस्य सर्वथैव वक्तव्यत्वेन तथैव 'तत्सुतोऽपि' इत्यनेन दुहितुरभाव एव तदधिकारप्रतीतेः। एवं च दौहित्राभावे मातृगामि "तदभावे मातृगामी" इतिनिरपवादविष्णुसूत्रात्। लिखितबृहस्पतिवचनाच्च।

## 'मातुरभावे पितृगामि'

इति विष्णुसूत्रात्।

पितुरभावे ज्येष्ठभ्रातृगामि "प्रेतानां धनं ज्येष्ठस्य" इति गौतमवचनात्। तदभावे कनिष्ठभ्रातृगामि—

पिता हरेदपुत्रस्य धनं भ्रातर एव च।

इति विष्णुवचनात्। तदभावे भ्रातृपुत्रगामि 'तत्सुतो गोत्रजो बन्धुः' इत्यादि[2]वचनात्।

विभक्तसंस्थितं द्रव्यं पुत्राभावे पिता हरेत्।
भ्राता वा जननी वापि माता वा तत्पितुः क्रमात्॥

---

१. पुत्रसत्वे, इति क० पु०।
२. इत्यादेः, इति क० पु०।

इति कात्यायनविरोधान्नैवमिति चेन्न, पित्रर्जितं पिता गृह्णीयाद्, भ्रात्राद्यर्जितं भ्रात्रादिरिति विषयभेदेनैवोपपत्तेः। पैठीनसिः—

अपुत्रस्याभार्यस्य भ्रातृगामिद्रव्यं तदभावे
मातापितरौ लभेताम्

देवलः—

ततो दायमपुत्रस्य विभजेरन् सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा॥
सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम्।
एषामभावे गृह्णीयुः सकुल्याः सहवासिनः॥

तुल्याः सहोदरा एव। सवर्णा भ्रातरो वैमात्रेयाः। अत्र च देवलोक्तक्रमेण सह विष्णुयाज्ञवल्क्यक्रमयोर्विरोधमाशङ्क्य 'यथाक्रमम्' इति पदं देवलीयं याज्ञवल्क्योक्त क्रमानति क्रमेणेति हलायुधेन व्याख्यातम्। देवलवचनलेखनानन्तरं विष्णुयाज्ञवल्क्यवचने लिखितवतः कल्पतरुकारस्याप्येवमेवाशयः। एतत्तु न मनोरमम्, न हि स्वोक्तक्रममुल्लङ्घ्य परोक्तक्रमो 'यथाक्रमम्' इति स्वोक्तस्यार्थो भवितुमर्हति, उपस्थितं विहायानुपस्थितपरिग्रहणे गौरवात्। एवमपि पैठीनसिवचनविरोधापरिहाराच्च। तस्मात् पूर्वपुरुषार्जिते धने विष्णुयाज्ञवल्क्योक्तः क्रमः, तदन्यधने तु पैठीनस्याद्युक्तः क्रम इत्येव न्यायसहमिति।

गौतमः "नानृतवचने दोषोऽस्ति, जीवनं चेत्तदधीनम्, न तु पापीयसो जीवनम्" इति। पापीयसश्चौरादेः। मनुः—

न वृथा शपथं कुर्यात् स्वल्पेऽप्यर्थे नरो बुधः।
वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति॥
कामिनीषु विवाहेषु गवां भुक्ते तथेन्धने।
ब्राह्मणाभ्युपपत्तौ च शपथैर्नास्ति पातकम्॥

कामिनीष्विति रहसि कामिनीसन्तोषार्थम्। वृथा शपथैरेव यत्र विवाहसिद्धिस्तदर्थं गोग्रासार्थं ब्राह्मणादिरक्षार्थं च न दोष इत्यर्थः।

## अथाशौचम्

दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा।
स्वमशौचं चरेत्सम्यक् पृथक् स्थाने व्यवस्थिता॥
तद्बन्धुवर्गस्त्वेकेन शुद्ध्यते जनकस्त्रिभिः।

दत्ता नारी पृथक्स्थाने व्यवस्थिता सूता मृता वा, तदा तत्पतिसपिण्डः स्वकीयमेवाशौचं चरेत् "दत्तानां भर्तुरेव हि" इति वचनैकवाक्यताबलादिति मध्यमखण्डार्थः। न चाध्याहारदोषः, प्रामाणिकत्वात्, अन्यथा 'पृथक्'[1] इत्यस्य वैयर्थ्यापत्तेः। पित्रोस्तद्गेह एव तस्याः प्रसवे मरणे वा त्र्यहमेवाशौचम्।

---

१. 'पृथक्' इत्यादि, इति क० पु०।

गृहे मृतासु कन्यासु दत्तासु च तथा त्र्यहम् ।
निवासराजनि प्रेते जाते दौहित्रिके गृहे ॥

इत्यसपिण्डाशौचप्रकरणस्थासंकुचितशंखवचनात् । भ्रातॄणां त्वेकाहमेव—

ज्ञातौ चासपिण्डेषु च प्रत्तासु च स्त्रिषु दन्तजाते परिजाते चैकाहम् ।

इति तत्प्रकरणस्थाश्वलायनसूत्रात् परिशिष्टखण्डार्थ इति परमगुरवः। हारलताकृतस्तु अध्याहारदोषमनङ्गीकुर्वन्तः पितुः शयनभोजनाद्यसाधारणगृहे तस्याः प्रसवे मरणे वा पितुः स्वजात्युक्तमशौचम्, भ्रातॄणां त्र्यहम् । तद्भिन्नगेहे तस्याः प्रसवे मरणे वा पितुस्त्र्यहम्, भ्रातॄणामेकाहमिति ब्रुवते । तत्र तस्य वृश्चिकभिया पलायमानस्य तरक्षुमुखे निपातमवलोक्यास्माभिः किंचिन्नोक्तम्[1] । यद्यपि 'स्त्रमशौचम्' इत्यत्र स्वशब्दस्य ज्ञातावपि शक्त्या 'तत्पतेः सपिण्डः, इति विवरणम्, 'स्त्रो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो स्त्रियां धने, इत्यनुशासनविरोधादापाततः शुद्धौ चिन्त्यमेव[2] । तथापि स्त्रमित्याशौचविशेषणतया प्रकृतपरतयैव नेयमिति द्रष्टव्यम् । अत्र, 'सूयते' इति श्रवणाद् वीजिनश्चतुर्थ्यादिकन्याजननेऽप्यशौचमेव, सपिण्डाप्रसवस्यैव तद्धेतुत्वात् न तु तज्जननस्य, अप्रयोजकत्वात् । अत एव शिष्टाचारोप्येवमेवेति साम्प्रदायिकाः । वस्तुतः 'जननेऽप्येवमेव स्यात्, इति मनूक्तेः 'गृहे मृतासु' इत्यादिशंखवचने 'जाते दौहित्रके तथा' इति श्रुतेः, सपिण्डजननस्यैव तद्धेतुत्वात् । तेन बीजितोऽष्टमजनने चतुर्थकन्याजनने वा नाशौच इति तत्त्वम् । अत एव 'कन्यानां त्रिपुरुषी सपिण्डता' इति ब्रह्मपुराणे 'इदमशौचपरम्' इति विवरणमपि संगच्छते । न चैवमाचारविरोधः ? श्रुतिविरोधेन तस्य दुर्बलत्वात् । वस्तुतस्तु—

वर्णानामानुलोम्येन स्त्रीणामेव यदा पतिः ।
दशाहषट्त्र्यहैकाहाः प्रसवे सूतकं भवेत् ॥

इति श्रुतेः प्रसवस्यैवाशौचहेतुत्वादिदमशौचादिपरमिति सपिण्डता मरणे कन्यामरणमात्रपरमिति तत्त्वम् ।

अपि दातृगृहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथञ्चन ॥
विज्ञाते भोक्तुरेव स्यात् प्रायश्चित्तादिकं क्रमात् ।
भोजनार्द्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते ॥
यदि कश्चित्तदुच्छिष्टं शेषं त्यक्त्वा समाहिताः ।
आचम्य परकीयेण जलेन शुचयो द्विजाः ॥

अत्राशौचस्य नैमित्तिकत्वाद् वाचनिकत्वाच्च दातुरशौचं भोक्तुरशौचं वा दातृभोक्तृभ्यां न ज्ञायते तदा श्राद्धादिषु भोजने तूभयोरपि दोषाभाव एव । यदा तु स्वीयमशौचं दाता जानाति, भोक्तापि जानाति तदीयमशौचं, तदा लोभाद् भुञ्जानस्य प्रायश्चित्तमशौचञ्च, 'अविज्ञाते'

---

१. नोक्तमिति दिगिति क० पु० ।
२. चिन्त्यमिवेति क० पु० ।

इति पदात्। एवं च दातुरशौचे दात्रा विज्ञातेऽपि भोक्तुर्दोषाभाव एवेति तत्त्वम्। शिष्टानां शंकशुकतया तत्र विगानमित्यवसेयम्।

## अथ दशरात्राः।

संनिपतेयुराद्यं दशरात्रमशौचमानवमाद्दिवसात्।

इति बौधायनसूत्रे अशौचोपान्तदिनपर्यन्तं द्वितियाशौचपाते पूर्वमेवाशौचमिति बौधायनमतेन तु सहोत्तराशौचबोधकानामाद्यं भागद्वयं यावदित्यादिवचनानां विरोधे[1] बौधायनवचनं बहुवचनाश्रयणा[2]द्बहाशौचपातपरम्। अन्यानि तु वचनानि द्वितीयसंनिपातपराणि, विषयभेदादविरोध इति प्रकाशकृतस्तन्मन्दम्। अशौचमात्रसंकरे व्यवस्थाया अपेक्षितत्वेनोद्देश्यगतत्वेन संख्यायां तात्पर्याभावेन "यस्योभयं हविरार्त्तिमार्च्छेत् स ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्युभयत्वस्येवात्र बहुत्वस्याविवक्षणात्। अत एवोद्देश्यगतसंख्याया लिङ्गस्य वाऽविवक्षैव, किन्तु विधेयगतस्यैव, लिङ्गस्य संख्यायाश्च विवक्षेति सिद्धान्तः। कथं तर्हि "यस्योभयाग्नी अभिम्लोचेयाताम् तस्य पुनराधानं प्रायश्चित्तिः" इत्यत्रोभयत्वविवक्षेति सुहृद्भावेन पृच्छामः। उच्यते, एकसंस्कारावरुद्धेऽपरसंस्कारानुदयनियमेनानुपपत्त्या तत्रोभयत्वविवक्षाया वज्रलेपायितत्वात्, एवञ्च विवक्षायामाकांक्षाविरहस्यैव प्रयोजकत्वात्। भट्टमते तु संस्कारस्य व्याप्यत्वा[3]दिति न क्वापि विरोधः, सर्वं सुस्थम्।

अशौचसंकरे तु 'द्वाभ्यामेकमेवाशौचं जन्यते' इत्यत्र संभूयारम्भकताया मानाभावात्, फलानुरोधेन च कल्पनेऽपि मानाभाव एव। तेन क्वचित्प्रथमस्यैवाभिवृद्धिः क्वचिदुत्तरस्यैव हानिरित्येव सारम् 'आद्यं भागद्वयम्' इति ब्रह्मपुराणात्। अत एव 'यद्वा' इति परमगुरुत्रो लिखन्तीति।

देवलः—

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्॥

मरणस्य मरणत्वेनैव गरीयस्त्वं न त्वधिकदिनव्यापकत्वेन। तथा लघीयसापि सद्यःशोचेन दिनगरीयोऽपि दशरात्रादि व्यापकं जननाशौचमत्येतीत्यर्थः। अल्पदिनव्यापकं लघु, बहुदिनव्यापकं गुरु, तयोः संकरे गुरुणा व्यतीतेन शुद्धिः। जननाशौचेऽप्येवम्। समानदिनव्यापकयोर्मरणयोर्जननयोः प्रथमार्द्धे द्वितीयसमानजातीयसंपूर्णाशौचोपनिपाते प्रथमापगमेनैव शुद्धिः। द्वितीयार्द्धे तूपान्त्यदिनपर्यन्तं तादृशद्वितीयाशौचपाते द्वितीयापगमेनैव शुद्धिः।

आद्यं भागद्वयं यावत् सूतकस्य तु सूतके।
द्वितीये पतिते चाद्यात् सूतकाच्छुद्धिरिष्यते॥
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिःस्मृतः।
एवमेव विचार्यं स्यान्मृतके सूतकान्तरे॥

---

१. विरोधात्, इति पाठः समुचितः प्रतिभाति।

२. अशौचपातपरमिति क० पु०।

३. व्याप्यवृत्तित्वात्, इति क० पु०।

इति ब्रह्मपुराणात्। अन्तिमदिने तु द्वितीयस्य सजातीयस्य संपूर्णाशौचस्य प्राचीप्रकाश-पूर्वसमये पाते एतद्दशाहाधिकदिनद्वयेन शुद्धिः। प्राचीप्रकाशसमये त्वेतादृशद्वितीयस्य पात एतद्दशाहाधिकेन दिनत्रयेण व्यतीतेन शुद्धिः। "अहःशेषे द्वाभ्यां प्रभाते दिनत्रयेण" इति शंखलिखितवाक्यात् न त्वशौचान्तदिनमादाय द्वित्रिगणना, विध्यनुवादवैषम्यापत्तेः। अशौचान्त-दिन एव तु लघीयसः पाते गरीयसा प्रथमेनैव शुद्धिः, 'ज्ञेया शुद्धिर्गरीयसा' इति वचनात्। वर्द्धितेऽपि दिनद्वये दिनत्रये वा लघीयसः पाते, एवं तयोरेव सजातीयसंपूर्णाशौचान्तरपाते वा पूर्वोक्तव्यवस्थापकवचनैः संपूर्णाशौचविषयकैरनालिङ्गनात्।

अववृद्धावशौचं तु पश्चिमेन समापयेत्।

इत्यादिवचनेन सामान्यमुखप्रवृत्तेनोत्तरव्यपगमादेव शुद्धिरेषितव्या। त्र्यहाशौचेऽपि सजातीयत्र्यहाशौचान्तरपात एवमिति सर्वं सुस्थम्। अत्र यदि संभूयारब्धानां गुरुत्वं तदा खण्डाशौचपातवत् संपूर्णाशौचपातेऽप्येवं प्रसङ्गः। प्रातिस्विकाशौचविवक्षायां गुरुत्वस्यैवासिद्धेः खण्डाशौचेऽपि व्यवस्थानुपपत्तेः। किं च त्र्यहाशौचेऽपि त्र्यहाशौचान्तरपात उत्तरव्यपगमादेव शुद्धिरिति स्वलेखनविरोध इति चेदत्रोच्यते-संभूयारब्धानामेव गुरुत्वं तेन खण्डाशौचे नानुपपत्तिः, जात्युक्ताशौचपाते तु तस्यैव नाशयत्वकल्पनात्। एकाहपाते 'अनयोः समानो दशरात्रः' इति बोधायनवचनादेव व्यवस्थेति। विषमदिने 'आद्यं भागद्वयम्' इति ब्रह्मपुराणोक्तैव व्यवस्था। अन्तिमदिने शंखलिखितोक्तैव व्यवस्था। तस्मात् पूर्वोक्तव्यवस्थावचनैः संपूर्णाशौचबोधकैरना-लिङ्गनात्। "अववृद्धावशौचं तु पश्चिमेन समापयेत्' इति सामान्यप्रवृत्तादेव व्यवस्थेत्युक्तम्। अत एव 'संकरस्तु जननयोर्वा जननमरणयोर्वा मरणयोर्वा, तत्राद्यतृतीययोर्न्यूनाधिकयोर्वा" इति विकल्पः संगच्छत इति।

अपि दातृगृहोत्रोश्च सूतके सति चान्तरा।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथञ्चन॥

इत्यनेन स्वरूपसतोऽशौचस्याकिञ्चित्करत्वेन ज्ञातस्यैव तद्धेतुत्वात्, अशौचस्य नैमित्तिकत्वाच्च। "भिन्नेषु जुहोति" इत्यादौ नैमित्तिकहोमे तथा सिद्धान्तनादिति। न च

संवत्सरस्यैकमपि चरेत् कृच्छ्रं समाहितः।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य च विशेषतः॥

इति मनुवचनेनाज्ञाते प्रायश्चित्तोपदेशाद्व्यभिचार इति वाच्यम्, विशेषवचनानालिङ्गितत्वे सति नैमित्तिकत्वस्य विवक्षितत्वात्। ज्ञातस्य सपिण्डमरणादेरशौचहेतुत्व एकस्मिन् सपिण्डे मृते ज्ञाते च तदशौचाभ्यन्तरे सपिण्डमरणे वृत्तेऽपि येन तन्न ज्ञातं तस्य न संकरः, अशौचयो-रेककालोपनिपाताभावात्। एवं च प्रथमाशौचापगमानन्तरं द्वितीयश्रवणेऽपि न संकरः, प्रथमाशौचस्यातीतत्वात्। द्वितीयाशौचस्य यावानवशिष्टः कालस्तावदेवाशौचम्। 'तावदेवा-शुचिर्भवेत्' इति निरपवादवचनबलात्। अशौचयोर्यौगपद्याभावेनोभयथापि वाध्यवाधकता-नुपपत्तेः। अत एव दशमाहनतिते संपूर्णाशौचान्तरेऽप्येकादशाहादौ ज्ञाते 'नाहःशेषे द्वाभ्याम्' इत्यादिबोधितापकर्षे मानाभावादिति।

अचेतनेष्वशुचिस्वामिकेष्वन्नादिषु चाशुचिस्वामिकत्वादेव कर्मानर्हत्वम्, न त्वन्नादिनिष्ठे शुद्ध्यशुद्धी, तयोरदृष्टरूपत्वात्। किं चैकतरभ्रात्रा स्वाशौचे ज्ञातेऽन्नानामशुद्धत्वे भ्रात्रन्तरेण

कृतं कर्म तैरेवान्नैरशुचिद्रव्यकृतत्वाद् व्यर्थं स्यात् । न स्याच्च क्रीत्वा कुर्वतां कर्मसिद्धिः, क्रयस्याशौचापलापकत्वास्मरणात् । तस्मादशुचेरन्नादीनि शुचिन्येव । किन्त्वशुचिना स्वामिना विनियोजितानि फलाजनकानि । शुचिना भ्रात्रन्तरेण व्यापार्यमाणानि फलजननसमर्थान्येवेति तत्त्वम् ।

कश्यपः—

रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नैवोदितो रविः ॥
उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥

इत्यनुशासनेन पक्षिण्यशौचे रात्रौ ज्ञाते श्रवणकालादारभ्य द्वादशयामगणनया शुद्धिरिति गौडानां भ्रमो निरस्तः । अशौचेऽपि चाण्डालादिस्पर्शनिमित्तकं स्नानं तत्क्षणमेव कार्यम्, 'न च मुहूर्त्तमप्यप्रयतः स्यात्' इति वचनस्य प्रयत्नापनेयाशौचपरत्वात् । न च शौचस्याधिकारिविशेषणस्याभावात् प्रवृत्त्यनुपपत्तिः, अत्र निषेधशास्त्रे शौचस्यानङ्गत्वात् 'नागम्यां गच्छेत्' इतिवत् ।

सूतिका सर्ववर्णानां दशरात्रेण शुद्ध्यति ।
ऋतौ न च पृथक् शौचं सर्ववर्णेष्वयं विधिः ॥

इति चतुर्वर्णानामपि[1] स्त्रीणां मृतौ त्र्यहमेवाशौचम् । तथा च मदेन रोगेण वा चतुर्थादिदिनेष्वपि रजोऽनुवृत्तौ यथोक्तमृज्जलाभ्यामेव मलान्तरवत् क्षालनाचमनेनैव शुद्धिः, न तु तदनुवृत्तिपर्यन्तमशुचित्वमेव । 'चतूरात्रेण स्नातां सर्वकर्माणि कारयेत्' इति पैठीनसिसूत्रस्य,

तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ॥

इति मनुवचनस्य च निरपवादश्रुतत्वादित्यवसेयम् । एवं च

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ।

इति यथाश्रुतवचनमपास्तम् ।

पैठीनसिः—

सूतिकां पुत्रजननीं विंशतिरात्रेण सर्वकर्माणि कारयेत् । मासेन स्त्रीजननीम् ।

'सर्वकर्माणि' पाकादिलौकिककर्माणि, 'स्नाताम्' इति वचनात् । विंशाहत्रिंशदहानन्तरं पुनस्तासां स्नानं पाकाद्यनुष्ठानार्थमित्यायाति । वैधकर्मप्रतिबन्धकमशौचं मनूक्तं दशद्वादशाहादिरूपं चतुर्वर्णानामपि स्त्रीणाम् "जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम्" इति तद्वचनात् । रत्नाकरादयोऽप्येवम् । न च

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः ।
गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव च ॥

इति ब्रह्मपुराणवाक्ये ।

---

१. चतुर्वर्णजायानामपीति क० पु० ।

तथा—

जाते पुत्रे पितुःस्नानं सचैलस्य विधीयते।
माता शुद्धयेद् दशाहेन स्नानात्तु स्पर्शनं पितुः ॥

इति संवर्त्तवाक्ये। तथा—

सूतिका सर्ववर्णानां दशरात्रेण शुद्धयति।
ऋतौ च न पृथक् स्त्रीणां सर्ववर्णेष्वयं विधिः ॥

इति प्रचेतोवाक्ये कण्ठतोऽर्थतो वाऽस्पृश्यत्वलक्षणाशौचव्यपगमस्योक्तत्वान्नैवमिति वाच्यम्, वचनबलादेकदैवोभयनाशेऽप्यविरोधात्। अपि च ऋतुस्थले[1] "चतुरात्रेण स्नातां सर्वकर्माणि कारयेत्" इति पैठीनसिवाक्य एव 'सर्वकर्म' पदस्य लौकिककर्मपरत्वादत्रापि तत्परतैव। तत्र हि "दैवे कर्मणि पित्र्ये च' इति मनुवचनादस्तु तथा, प्रकृते सामान्यपरतायां बाधकाभावान्न तथा। भ्रान्तोऽसि ? मनुवचनस्यात्रापि तुल्यत्वात्। किञ्च, 'सर्वकर्म'पदस्य दृष्टादृष्टार्थककर्मपरत्वे शूद्राया पुत्रजनने विंशतिदिनोत्तरं दानाद्यधिकारो दुर्वारः स्यात्। तथा च पत्युर्मनूक्ताशौचव्यपगमे भार्यायाः पैठीनस्युक्ताशौचव्यपगमे वैदिककर्माधिकार इति महद्वैषम्यम्। न चैवमेवास्तु ? व्यवहारविरोधस्य वज्रलेपायमानत्वात्। अत एव संङ्कोचे मानाभावात् 'सर्वकर्म' पदस्य दृष्टादृष्टोभयकर्मपरत्वमिति परेषां मतमपास्तम्। ततः सर्वमभिसन्धायैव रत्नाकरकृता 'केचिदाहुः' इति वदता दृष्टादृष्टोभयकर्मपरत्वम् 'सर्वकर्म'पदस्य प्रत्यादिष्टम्। एवं च पैठीनस्युक्ताशौचाभ्यन्तरे विंशाहत्रिंशदहादर्वागेव स्त्रिया पत्युः श्राद्धं कार्यमेव।

मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्।

इत्यनेन लाघवाद् विहितकर्मानधिकारितावच्छेदकजननरूपसम्बन्ध्यशौचस्यैव नाश्यत्वावगतेः।

ननु तर्हि दशाहादर्वागपि पतिमरणाशौचान्ते तच्छ्राद्धापत्तिः ? प्रसवावधिकदशाहव्यापकत्वलक्षणाशौचस्य रजःसम्बन्धजन्यत्वेन रजस्वलाशौचवदपवादकैरप्यनपवादात्, एकत्र निर्णीत इति न्यायात्।

यत्तु स्त्रीणां प्रातिस्विकरूपेणाशौचं मरणाशौचेन नाश्यते, तेनान्तरा पतिमरणे विंशाहाभ्यन्तरमेव तत्रापि पत्युः श्राद्धमिति केषाञ्चिन्मतम्। पैठीनसिसूत्रं त्रैवर्णिकविषयकमेवेति प्राञ्चः। तदुभयमपि मन्दम्, उभयत्र सङ्कोचापत्तेः।

ब्रह्मपुराणे

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः।
गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव च ॥

इत्यधमशूद्रा-विषयम्, सच्छूद्रा च दशाहेनैव स्पृश्या भवति।

सूतिका सर्ववर्णानां दशरात्रेण शुद्धयति।
ऋतौ च न पृथक् शौचं सर्ववर्णेष्वयं विधिः ॥

---

१. ऋतुस्थलीये इति क० पु०।

इति वचनात् । न च 'सर्ववर्ण'पद एव सङ्कोचोऽस्तु, विनिगमनाविरहात् ? ऋतुशौचस्य-'च'कारोपष्टव्धसर्ववर्णानुरोधेन प्रथमसर्वपदासङ्कोचस्य न्याय्यत्वात् । भर्तृमरणावधिकषष्ठदिनादौ स्त्रिया पत्यनुमरणे कृतेऽपि प्रथमाशौचव्यपगमेनैव शुद्धिः, साङ्कर्यस्यैवाभावादिति सुव्यक्तमेव ।

तुल्ये वयसि सर्वेषामतिक्रान्ते तथैव च ।
उपवीते तु विषमं तस्मिन्नेवातिकालजम् ॥

तस्मिन्नेवेति विशेषविधेरेकाहाद्यतिक्रमे, न पुनः किञ्चिदशौचम्, किन्तु स्नानमात्रमेवेत्यर्थः, कन्यावालयोर्गोत्रजस्य चाशौचकाले न स्नानमपि, अनविधानात् । विदेशस्थाशौचे तु नैवमिति ।

जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ।

इति मनुवचनात् 'जननम्' अशौचनिमित्तम्, तेन जायमानस्यापेक्षयाष्टमस्य न सपिण्डत्वप्रयुक्तमशौच इति द्रष्टव्यम् । वृद्धमनुः—

वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः ।
महानद्यन्तरं यत्र तद्देशान्तरमुच्यते ॥

वाकारोऽत्र समुच्चये । 'वा स्याद्विकल्पोपमयोरेवार्थेनिश्चये' इति विश्वकोशात्, न तु विकल्पे, वाक्यभेदापत्तेः । तेन त्रितयविशिष्टस्य देशान्तरत्वम् । 'आहितः पूत आहवनीयो भवति' इतिवत् । तथा—

देशनामनदीभेदान्निकटोऽपि भवेद् यदि ।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयंभुवा ॥

देशनामेत्युपलक्षणम् । तेन त्रितयवैशिष्ट्यमत्र विवक्षितम् । बृहस्पतिः—

देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च ॥ इति ।

इदमत्राकूतम् । त्रितयवैशिष्ट्ये त्रिंशद्योजनाभ्यन्तरे, द्वितयवैशिष्ट्ये त्रिंशद् ( चत्वारिंशद् ) योजनोपरि, वाणी-गिरिनदीभेदाभावेऽपि षष्टियोजनान्तराले वैदेश्यम्, अत्रैव मृतस्य सद्यः शौचम् । तथा च पैठीनसिः—

देशान्तरमृतस्य सद्यः शौचं वैवस्वत आह ।

पारिभाषिकविदेश एव मरणज्ञानं सद्यः शौचहेतुः, तेन केरले मृतस्य मिथिलायां सद्यः शौचम् । अत एव मिथिलामृतस्य तदानीं मिथिलास्थस्यापि केरल एव श्रवणे सद्यः शौचमेव । मिथिलास्थस्यापि केरलमृतस्य केरल एव श्रवणे तु न सद्यः शौचम् । देशान्तरत्वस्याननुगततया सर्वथैवावश्यपेक्षायां मरणश्रवणाधिकरणीभूतदेशस्यैवावधित्वेन वक्तव्यत्वादिति । अत्र विशेषानभिधानात् मातापित्रोरपि मरणे इयमेव व्यवस्थेति । यत्तु—

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सुतकी भवेत् ॥

इति पैठीनसिवचनम्

पितृपत्न्यामपेतायां मातृवर्जं द्विजातयः ।
संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेत् ॥

इति स्मृतिवचनं च विरुद्ध्यत इति, तन्न, एतयोरनाकरत्वात् । मनुः—

अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते[1] तु स्पृष्ट्वैवापो विशुद्ध्यति ॥

गोतमः—

दृष्ट्वा चोर्ध्वं दशम्याः पक्षिणी ।

पक्षिणी च दिनद्वयसहिता रात्रिः ।

आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी ।

इत्यभियुक्तस्मृतेः । रात्रिमरण[2]श्रवणपक्षेऽपि तथैव 'पूर्वमेव दिनं ग्राह्यम्' इति वचनात् ।

देवलः—

अशौचाहे व्यतीते तु बन्धुश्चेच्छ्रूयते मृतः ।
तत्र त्रिरात्रमाशुच्यं भवेत् संवत्सरान्तरे ॥
ऊर्ध्वं संवत्सरार्द्धात्तु श्रूयते चेन्मृतः स्वकैः ।
भवेदेकाहमेवात्र तच्च संन्यासिनां न तु ॥

अत्र च वर्षं त्रिधा विभज्य क्रमेण भागत्रये त्र्यहपक्षिण्येकाहा व्यवस्थाप्याः "समं स्यादश्रुतत्वात्" इति केचित्, तन्न, देवलवचनेनाद्यषट्के त्र्यहस्य श्रुतत्वात्, 'समं स्यात्' इति न्यायस्यानवतारादिति । किन्तु षण्मासं यावत् त्र्यहम्, देवलेनोत्तरार्द्धेऽन्यथा विधानात् । सप्तमाष्टमनवममासेषु पक्षिणी 'ऊर्ध्वं दशम्याः' इत्यविशेषश्रुतेः । दशमैकादशद्वादशेषु मासेष्वेकाहम् 'ऊर्ध्वं संवत्सरार्द्धात्' इति श्रुतेः । 'समं स्यादश्रुतत्वात्' इत्यबाधितन्यायादिति । संवत्सरानन्तरं तु श्रवणे स्नानमात्रम् ।

संवत्सरान्तस्त्वेकरात्रेण ततः परं स्नानमात्रेण ।

इति विष्णुवचनात् । मनुः—

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य पूतो भवति मानवः ॥

अत्र त्र्यहाशौचार्हस्य ज्ञातिमरणस्य दशाहाभ्यन्तरे चतुर्थदिनादावपि श्रवणे त्र्यहमेवाशौचम् 'निर्दशम्' इत्यभिधानात् । दशाहादूर्ध्वं तु श्रवणे स्नानमात्रमिति परमगुरुचरणाः । युक्तं चैतत् । अत एव रत्नाकरे "अतिक्रान्तदशाहे वै त्रिरात्रमशुचिर्भवेत्' इत्यत्र त्र्यहं संपूर्णाशौचाधिकारिणि सपिण्डे द्रष्टव्यम्, 'स्वे स्वे' इत्यभिधानात् । 'निर्दशम्' इत्यादिना विशेषाभिधानाच्च" इत्युक्तम् । अन्यथा तद्विरोधः स्यात् । वस्तुतस्तु सपिण्डासपिण्डोभयपरम्, तेन सपिण्डमरणे संवत्सरान्तरमेकवाक्यतयाऽसपिण्डामरणे च त्र्यहैकाहानन्तरं स्नानमात्रेण शुद्धिरित्येव सर्वाविरोधेन रमणीयम् । अन्यथा 'तस्मिन्नेवातिकालजम्' इति वचनविरोधः स्यादिति । ननु

---

१. व्यतीते वै इति क० पु० ।
२. रात्रिमरणपक्षेऽपि इति क० पु० ।

सद्यः शौचस्याहर्मात्रव्यापकत्वम् 'सद्यः परुत् परार्य्यैषम्' इति पाणिनीय-निपातबलात्। न च 'सद्यः शौचं तथैकाहम्' इत्यादिपरिसंख्यानविरोध इति वाच्यम् ? एकाहपदस्याहोरात्रपरत्वात्' इति चेन्मैवम्. एवं हि संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति' इत्यादिबोधितक्षण-व्यापकाशौचस्य सद्यः शौचभिन्नत्वे,

सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा।
षड्दशद्वादशाहश्च पक्षो मासस्तथैव च॥
मरणान्तं तथा चान्यद् दशपक्षास्तु सूतके।

इति दक्षवाक्ये कथं विभागः स्यात् ? तस्मात् प्रकृते 'सद्यः' पदस्य क्षणवाचकत्वमेव, 'सद्यः सपदि तत्क्षणम्' इत्यभियुक्तस्मृतेः। निपातसूत्रस्य दक्षविरोधेनान्यत्र तात्पर्यात्। पक्षिण्यशौचे त्वगत्या विभागभङ्ग इति सुव्यक्तमेवेति।

## अथ सापिण्ड्यम्

शङ्खः—

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी।
पिण्डश्चोदकदानं च शौचाशौचं तदानुगम्॥

'गोत्रतः' इति। गोत्रं सन्ततिः, तेन बीजिनमारभ्य सप्तमपुरुषमभिव्याप्य सर्वेषां सन्तानिनां सन्तानानां च सापिण्ड्यम्। एकस्यापि सप्तमाधिकत्वे तेन समं सप्तमान्तर्गतस्यापि सापिण्ड्यं निवर्त्तते संयोगवदुभयनि[1]ष्ठत्वात्। पिण्ड इह शरीरम्। तेन समानमेकं शरीरं येषां ते सपिण्डाः। एकत्वन्तु जनकशरीरानुबन्धात्। तदुक्तं गर्गोपनिषदि 'अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृतः" इति। पत्नीनां नु पत्या समम्, 'अस्थोनि' इत्यादिश्रुतिबलात्। तत्सपिण्डैस्तु तद्द्वारैव। एवं साक्षात्परम्परासाधारणमिदं सापिण्ड्यमासप्तमपुरुषम्। एवं च सति पैतृष्वस्त्रे यादेरशौचलाघवं वचनबलात्। मिताक्षराप्येवम्। ननु सपिण्डपदमुक्तरीत्या यौगिकम्, योगश्चातिप्रसक्तोऽष्टमादेरपि परम्परया एकशरीरान्वयसंभवात्। अत्राहुः— बीजिनमारभ्य सप्तान्यतमत्वस्य प्रयोगोपाधिरूपस्य संभवात्।

पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा।
सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः॥

सपिण्डपदस्योक्तोपाधिसहितस्योक्तरीत्या सप्तान्यतमत्वावच्छिन्ने नियमितेऽर्थेऽर्थादष्टमादि-सापिण्ड्यनिषेधे सिद्धे 'ऊर्ध्वं निवर्त्तते' इत्यनुवादः। यथा 'एवं कृत्वोल्लेयम्' इत्यत एव मन्त्रस्यान्यथा पाठे निषिद्धे 'न गिरागिरेति ब्रूयात्' इत्यनुवादः, मातुलादिषूक्तसापिण्ड्य-सत्त्वेऽप्यशौचादिभेदो वचनबलादिति। यद्वा तत्र शङ्खवचने लेपभागिनमादाय सप्तान्यतमत्वम्।

अत एव

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्त्वेषां सापिण्ड्यं साप्तपौरुषम्॥

---

१. निरूप्यत्वाद् इति ख. पु.

इति मत्स्यपुराणमपि संगच्छते। इदं तु सापिण्ड्यं निरूपणीयपितृपिण्डान्वयप्रयुक्तम्, तत्रैव लेपभाजामन्वयात् स्वपितृवंश्यातिरिक्तानां न संभवतीत्यतो न पूर्ववदत्रातिप्रसङ्गशङ्का।

मनुः—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥

'सप्तमे' इति मृतानां मध्ये सप्तमे, तेन पिण्डदेऽष्टम इत्यर्थः। यद्वा सप्तमे सति बीजितोऽष्टमे निवर्तत इत्यर्थः।

ब्राह्मे—

सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी।
सपिण्डता ततः पश्चात् समानोदकधर्मता॥
ततः कालवशात्तत्र स्मृतेस्तद्गोत्रनामभिः।
समानोदकसंज्ञा तु तावन्मात्रापि नश्यति॥

एते च बीजितः सप्तान्यतमाः सपिण्डास्त एव संपूर्णाशौचभाजः। तदुक्तं बृहस्पतिना—

दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नानमात्रेण गोत्रजाः॥

अत्र 'दशाहेन' इति स्वस्वजात्युक्ताशौचोपलक्षकम्। अष्टमपुरुषादारभ्य दशमपर्यन्तं जन्मनाम्नोरविज्ञानेऽपि समानोदकास्त एव त्र्यहाशौचभाजः।

त्रिरात्रेण सकुल्यास्तु स्नानमात्रेण गोत्रजाः।

इति बृहस्पतिवचनात्।

"गुरौ चासपिण्डे त्रिरात्रम्"

इत्याश्वलायनवचनाच्च। 'असपिण्डे' सकुल्य इति तद्विवरणात्।

सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी।
सपिण्डता ततः पश्चात्समानोदकधर्मता॥

इति कण्ठत एव तत्प्रतिपादनात्। सुमन्तुः—

ब्राह्मणानामेकपिण्डस्वधानामादशमाद् धर्मविच्छित्तिर्भवति,
आसप्तमाद् ऋक्थविच्छित्तिर्भवति।
आतृतीयात् स्वधाविच्छित्तिर्भवति।
अन्यथा पिण्डाशौचक्रियाविच्छेदाद् ब्रह्महातुल्यो भवति।

एकपिण्डस्वधानामिति निरूपणीयैकपिण्डस्वधान्वयिनो धर्मोऽशौचादिः 'आदशमात् परतः' अत्र च 'दशमपर्यन्तमेकपिण्डान्वयो न' इत्याशङ्क्य 'यस्य कर्त्तुस्त्रयः पुरुषा जीवन्ति तस्यैकपिण्डान्वयः' इति रत्नाकरे उक्तम्। 'आसप्तमात्' इति चिरविदेशस्थपश्चादागतदायादविषयम्। 'आ तृतीयात्' इति स्वधात्र पिण्डः। 'अन्यथेति' चतुर्थादर्वाक् पिण्डस्याष्टमादर्वाग् ऋक्थस्यैकादशादर्वागशौचस्य निवृत्तौ पापीयान् भवतीत्यर्थः। हन्त ? एवं दशमपुरुषपर्यन्तमुक्तविशेषणवतां ब्राह्मणानां सापिण्ड्यं संपूर्णाशौचं च स्यादुक्तवचनबलादिति चेत् ? एवं सत्यनेदृशां क्षत्रियादीनां सप्तमाभ्यन्तरमृक्थविच्छित्तिर्भवेदितरविशेषाभिधानस्वरसात्। न चैतद्विशेषणं

धर्मविच्छित्तिमात्रपरम्, अग्रिमयोरपि सम्बन्धाकांक्षायामेतदन्वयस्यापरिहार्यत्वात् । अथ सप्तमाभ्यन्तरे दायनिवृत्तौ वाक्यान्तरविरोधः स्यादिति चेत्तुल्यमन्यत्रापि सप्तमोत्तरं सपिण्डतानुवृत्तौ बहुतरवचनविरोध इति । तस्माद् 'ब्राह्मणानाम्' इति 'एकपिण्डस्वधानाम्' इति द्वयमपि पक्षप्राप्तानुवादः । तेन दशमपुरुषपर्यन्तमशौचम् । परन्तु वाक्यैकवाक्यतया सप्तमपर्यन्तं पूर्णाशौचम्, तत आदशमं त्र्यहम्, तत्रैव जन्मनाम्नोरवेदनेऽप्येकाहाशौचम्, 'एकाहस्त्वसपिण्डः' इति हारीतवचनात् ।

ततः कालवशात्तत्र स्मृते तद्गोत्रनामभिः ।
समानोदकसंज्ञा तु तावन्मात्रापि नश्यति ॥

इति स्फुटमुपदर्शनात् । ततः स्ववंश्यत्वेन ज्ञायमाना गोत्रजाः, ते च स्नानमात्रापनेयाशौचभाजः, 'स्नानमात्रेण गोत्रजाः' इति बृहस्पतिवचनात् । तदतिक्रम एव पापोपदेश इत्येव सर्वाविरोधेन रमणीयम् ।

ये तु 'पक्षिणी त्वसपिण्डे योनिसम्बन्धे' इत्यविवेचितगोतमसूत्रात् समानोदके गोत्रजे वा पक्षिण्यशौचं मन्यन्ते, ते तु बृहस्पतिहारीतयोर्विरोधेन भ्रान्ताः । सूत्रे च सामानाधिकरण्येनान्वयः, 'मातुले पक्षिणी' इत्याद्येकवाक्यताबलात् । रत्नाकरादयोऽप्येवम् । ब्राह्मे सप्ताप्यभिधाय—

अविभक्तधनास्त्वेते सपिण्डाः परिकीर्त्तिताः ।

इदं तु धनग्रहणोचितसापिण्ड्यमेव । यतोऽविभक्तधनैः सपिण्डधनं ग्राह्यमिति भावः ।

ब्राह्मे—

सपिण्डता तु कन्यानां सवर्णानां त्रिपूरुषी ।

इदमशौचादिपरम् । अत एव सप्तमीपर्यन्तं मातृसपिण्डा, सा चाविवाह्येति व्यवस्था ।

अन्यथा—

पितृसम्बन्धात् सप्तमादविवाह्या ।

इति सुमन्तुविरोधः स्यात् । न चैवं 'मातृतः पञ्चमीं हित्वा' इत्यादिविरोधः स्यात् ? तस्य मातृसपिण्डातिरिक्तविषयकत्वादिति ।

मनुः—

दिवाकीर्त्तिमुदक्यां च सूतिकां पतितं तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ॥

'तत्स्पृष्टिनम्' इत्यत्र दिवाकीर्त्यादयः परामृश्यन्ते । चाण्डालादिस्पृष्टेन स्पर्शने स्नानम् । तदाह गोतमः—

पतितचाण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचैलमुदकोपस्पर्शनाद्विशुद्ध्यति ।

'उपस्पर्शनात्' स्नानात्, 'सचैलम्' इति श्रवणात् ।

देवलः—

उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति ॥

उपस्पृश्येति श्वपाकादिस्पृष्टेन 'स्पृष्टम्' स्पृष्ट्वा हस्तादिक्षालनाचमनाभ्यामेव शुद्धय-तीत्यर्थः। इदं चाबुद्धिपूर्वकविषयम्, अतो न गोतमविरोधः। बुद्धिपूर्वकस्पर्शे तु गौतमोक्तैव व्यवस्था। चतुर्थकर्मकस्पर्शे त्वाचमनमपि नास्ति, अस्मरणात्[1]। पितुरसवर्णस्यापि तर्पणं शूद्रापुत्रेण कार्यम्,।

ब्राह्मणेन न कर्त्तव्यं शूद्रस्य त्वौर्द्ध्वदैहिकम्।
शूद्रेण वा ब्राह्मणस्य विना पारशवात् क्वचित्॥

इति वचनात्। 'और्ध्वदैहिकम्' इत्यस्य मरणोत्तरकर्मपरत्वात्।

सवर्णेभ्यो जलं देयं नासवर्णे कदाचन॥

इत्यादिनिषेधस्य तदितरपरत्वादिति।

तर्पणे तिला अनावश्यकाः, दर्भाश्चावश्यकाः। सर्वेषां मन्त्रास्तु त्रैवर्णिकानां नियता एव।

तिलानामप्यलाभे तु सुवर्णरजतान्वितम्।
तदलाभे निषिञ्चेत्तु दर्भैर्मन्त्रेण वाप्यथ॥

इति मरीचिवचनात्।

प्रेताधिकारे आश्वलायनः—

नैवास्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारलवणाशिनश्च स्युर्द्वादशरात्रं महागुरुषु।

'न पचेयुः' इति पाकनिषेध एव, न तूपवासविधिरपि।

प्रथमेऽह्नि द्वितीये च सप्तमे नवमे तथा।
ज्ञातिभिस्सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम्॥

इति मरीचिवचनेन सकलकुलस्यैव तदानीं भोजनविधानादिति केचित्, तन्न;

अधस्स्रस्तरे त्र्यहमनश्नन्त आशीरन्
क्रीतोत्पन्नेन वा वर्त्तेरन्।

इनि वशिष्ठवचनेन शक्तस्य त्र्यहोपवासविधानादशक्तावुपवासापकर्षः। अत्यन्ताशक्तस्य प्रथमदिनेऽपि पाकाभावो नियतः। परन्तु याचित्वा लब्धस्य क्रीतस्य वा फलमूलादेर्भोजनम्, तत्रैव मरीचिकथितबन्धुसाहित्यमिति तत्त्वम्। अधस्स्रस्तरे उद्वेजककटे। अत्र 'अक्षारं च तल्लवणं च' इति विशेषणसमासः, लाघवात्। न त्वितरेतरयोगः, प्रतिपत्तिगौरवात् लाक्षणि-कत्वात्, अलाक्षणिकत्वे वाक्यभेदापत्तेः। अत एवोभयनिवृत्तौ प्रत्याय्यायां विवाहनियमे 'अक्षारालवणाशिनौ स्याताम्' इत्याश्वलायन एव 'न' द्वयं पठति स्म। एवं चाक्षारलवणस्यैव निवृत्तिः, न तु सैन्धवादेरपि। रत्नाकरादयोऽप्येवम्।

पिण्डदाने ब्रह्मपुराणम्—

मृण्मयं भाण्डमादाय नवं स्नातः सुसंयतः।
लगुडं सर्वदोषघ्नं गृहीत्वा तोयमानयेत्॥

---

1. अस्मरणादि क० पु०।

अत्र च 'स्वयं वंशदण्डाहतं जलं कलशादिना समादाय' इति यद्विवरणं तच्चिन्त्यम्, ग्रहणमात्रस्य विहितत्वात्। प्रत्युत—

पादेन पाणिना वापि यष्ट्या शस्त्रेण चोदकम्।
न हन्यान्नापि वदेन्न च प्रक्षोभयेद् बुधः॥

इति याज्ञवल्क्येन तद्धननस्य निषेधात्।

विगोत्रे कृत्रिमपुत्रे दैवात् सगोत्रेणैव दाहे कृते कृत्रिमपुत्रेण पञ्चमदिने सपिण्डने कृतेऽपि सगोत्रेण यावदशौचं प्रेतपदेन पिण्डा देयाः।

प्रथमेऽह्नि यो दद्यात् स दशाहं समापयेत्।

इत्यादेस्तत्र[1] प्रेतत्वस्याप्रयोजकत्वात्।

प्रेतं तु नामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्।

इत्यनेन प्रथमक्रियायां तदुल्लेखावश्यकत्वादिति केचित्; तन्न, व्याघ्रपादवचने जात्युक्तशावाशौचान्ततृतीयाहलक्षणायां पञ्चमदिनस्यैव सपिण्डनकालत्वामिद्धेः, प्रकृतविचारस्यैवारण्यरुदितत्वादिति। वस्तुतस्तु पञ्चमदिनेऽपि सपिण्डने तत्प्रकाशनासामर्थ्येन तदुल्लेखस्यावश्यकत्वात्। सपिण्डनोत्तरमुदकुम्भदानवदिति।

देशान्तरितस्य द्वादशपञ्चदशवर्षाण्यज्ञातसत्त्वासत्त्वस्य पुत्रादिना सति सम्भवे कृष्णैकादश्यां पर्णनरदाहः कार्यः। पर्णनरदाहदिनादारभ्य त्र्यहमशौचम्।

एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्।

इति वचनात्। तच्चतुर्थदिने आद्यश्राद्धम्, पञ्चमदिने सपिण्डनम्। पर्णनरदाहतिथौ सांवत्सरिकम्। तदाह सतानन्दरत्नमालायां यमः—

गतस्य न भवेद् वार्त्ता यस्य द्वादशवार्षिकी।
प्रेतावधारणं तस्य कर्त्तव्यं सुतबान्धवैः॥

हेमाद्रिनिबन्धे जातूकर्णः—

पितरि प्रोषिते यस्य वार्त्ता न गृहमागता।
ऊर्ध्वं पञ्चदशाद् वर्षात् कृत्वा तत्प्रतिरूपकम्॥
कुर्यात् तस्य च संस्कारं यथोक्तविधिना पुनः।

अत्र च देशापेक्षया विकल्पः। केनापि प्रकारेण मृतानां सजातीयविजातीयानां शवानां विशीर्णावयवानां सन्निपातेऽधिकारिणा न सर्वेषां दाहः कार्यः, मानाभावात्, नापि पितुरेव परिचायकाभावात्। अत एव तदवस्थायामपि पितुः पर्णनरदाह एव।

अस्थ्नामलाभे पर्णानि सकलान्युक्तयावृता।
दाहयेदस्थिसंख्याभिस्ततः प्रभृतिसूतकम्॥

---

१. तत्र च क० पु०।

इत्यस्याक्षतेरिति दिक् ।

'अमावास्यायां पितृभ्यो दद्यात्' इति गोतमसूत्रे स्वतन्त्रविधिबलाद् रात्रावपि श्राद्धे प्राप्ते 'रात्रौ श्राद्धं न कुर्वीतेति' मानवो निषेधः प्रसज्यप्रतिषेध एव । अन्यथा न कुर्वीतेति विधि-वैयर्थ्यापत्तेः, पर्युदासापत्तेश्चेति गौडाः, तन्मन्दम्, कर्तृभेदे वैयर्थ्याभावात् । नञः प्रसज्य-प्रतिषेधार्थकत्वे वाक्यभेदापत्तेश्च ।

किञ्च—

ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तंचतुष्टयम् ।

इत्यादिवचनानां तथा पर्युदासाबोधकानां गोतमसूत्राणां च सर्वेषामेकवाक्यता स्यात्, अन्यथा त्वदुक्तरीत्या भिन्नभिन्नार्थकत्वे वाक्यभेदः स्यादिति ।

क्षत्रादिना नवमदिनानन्तरं पितृमरणे ज्ञातेऽन्तिमदिन एव सकलपिण्डा देयाः, अन्तिमपिण्डानुरोधात् । न तु प्रागेव पिण्डानां दानं मानाभावात् । दैवादन्येन दाहे कृते पश्चा-दधिकारिणि चागतेऽपि दाहकर्त्रा पिण्डा देया एव ।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ॥

इत्यादिना तस्य विहितत्वात् । तत्राधिकारिणा पिण्डा देया एव ।

अकृत्वा प्रेतकार्याणि प्रेतस्य धनहारकः ।
वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत् ॥

इति स्मृतेः ।

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।

इत्यादिस्मृतेरसङ्कुचितश्रवणाच्च । न च शरीरद्वयापत्तिः, द्वितीयस्यापि प्रथमारब्ध-शरीरपूरकत्वात् । भवतु वा द्वयम् ? किं तावतेति ।

रात्रौ मरणे जाते ज्ञाते वा निषिद्धकाले पिण्डा न देया इति स्मृतिसारमतम्, तन्न मनोरमम् ।

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्याद् निशि काम्यव्रतेषु च ॥

इति जाबालेन तदानीमपि तद्दानाभ्यनुज्ञानात् । मैथिलास्तु शङ्कमुकतया तद्दानं तदानीं न कारयन्तीत्यन्यदेतत् । एवञ्च कृतभोजनेनापि पित्रादिमरणे पिण्डा देया एव, व्रणाशौचवद्भोजनजन्याशौचस्य तत्राप्रतिबन्धकत्वात्, अशौचमुपमृद्यैव प्रवृत्तेराचाराच्च ।

स्त्रिया तु रजोयोगे पिण्डा न देयाः । अशौचापवादकैः सङ्कल्पादिभिरपि रजसोऽनपवादात् ।

अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।

इति मत्स्यपुराणे पूजापदस्य न्यायतौल्येन प्रवृत्तिरूपकर्मपरत्वात्, 'मैवं मेधमुपागाः' इति विशिष्य निषेधाच्च ।

न च—

कर्त्तुस्तात्कालिकी शुद्धिरशुद्धा पुनरेव सा।

इति वचनात्तस्यास्तदानीमधिकार इति वाच्यम्, तस्य प्रकृताशौचाप्रतिबंधकत्वदर्शकत्वात्

भर्तुः पिण्डप्रदाने तु साध्वी चेद् रजस्वला।
वस्त्रं त्यक्त्वा पुनः स्नात्वा सैव दद्याच्च पूरकम्॥

इति शातातपनाम्ना पठितं वचनमनाकरत्वादप्रमाणमिति।

अनग्नयो गृहिणः पूर्णिमासु मुण्डनमाचरन्ति, तत्र किं प्रमाणमिति चेदुच्यते—

न सीदेत् स्नातको विप्रः क्षुधाशक्तः कथञ्चन।
न जीर्णमलवद्वासा भवेच्च विभवे सति॥
राजतो धनमन्विच्छेत् संसीदन् स्नातकः क्षुधा।
याज्यान्तेवासिनो वापि न त्वन्यत इति स्थितिः॥
क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः।
स्वाध्याये चैव युक्तः स्यान्नित्यमात्महितेषु च॥
वैणवीं धारयेद् यष्टिं सोदकं च कमण्डलुम्।
यज्ञोपवीतं वेदञ्च उभे रौक्मे च कुण्डले॥
नेक्षेतोद्यन्तमादित्यमस्तं यान्तं कदाचन।
नोपरक्तं न वारिस्थं न मध्यं नभसोगतम्।

इत्यादिमनुवचनमेव प्रमाणम्। न चैतद्वचनं साग्निपरम्, मानाभावात्। अत एव ब्रह्मचारिकाण्डे—

अव्रते केशधारणमसङ्कल्पे व्रतक्रिया।
अब्रह्मचर्यचर्या च त्रिविधं दम्भलक्षणम्॥

अत एवापस्तम्बोऽपि "पौर्णमास्यां वैरमणे मातरि पितरि चाचार्ये च स्नानं तावन्तं कालमनुभाविनाञ्च परिवापनम्। न समावृत्ता वपेरन्नन्यत्र वीहारादित्येके, अथापि ब्राह्मणो रिक्तो वा एष न पिहितस्तस्यैतत्पिधानं यच्छिखेति"॥ वैरमण इति मातरि पितर्याचार्य्ये च वैरमणे विरमणसम्बन्धिनि मरणभाजि सति पुत्रस्य शिष्यस्य च तावन्तं कालं दशाहं व्याप्य स्नानं मज्जनमात्रमशौचान्ते शिरोमुण्डनं च। एवं पौर्णमास्यामपि गृहस्थानां शिरोमुण्डनमिति तदर्थात्। न समावृत्ता इति। एके त्वाचार्या मन्यन्ते समावृत्ताः कृतसमावर्त्तनाः पुरुषा मातापित्राचार्यमरणे न शिरोमुण्डनं कारयेयुरित्यर्थः। अत्र हेतुमाह—एष ब्राह्मणः शिखारूपाच्छादनशून्यः सन् रिक्तो भवति। तस्य ब्राह्मणस्य यच्छिखास्ति तदेवाच्छादनमिति तेन केशानां वपनं मातापितृमरणे च गृहस्थानां नास्तीत्येके आचार्या मन्यन्ते। त एवाचार्या वीहारो दर्शपूर्णमासाङ्गयागस्तत्र वपनं प्रतिप्रसुवतेऽन्यत्र वीहारादिति। तदिदमेषां मतमयुक्तम्, "प्रयागे तीर्थयात्रायाम्" इत्यादिविशेषवचनबोधितवपनस्य सर्वतन्त्रसिद्धत्वात्। किञ्चापस्तम्बेनैके त्विति वदता पौर्णमास्यादिवपनस्य सर्वाचार्यसिद्धत्वं सूचितम्।

अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः।
प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणम्॥

अकालेऽमावास्यादिभिन्नकाले, न तु रात्र्यादौ, बाधसापेक्षतापत्तेः। यत्त्वकाल इति न हि कोपि वारः कापि तिथिर्वा न श्राद्धकालः, सर्वत्रैव श्राद्धविधानादिति। तस्मादकालत्वेन रात्र्यादिकमेव प्रतिप्रसूय विधीयत इति भ्रान्ताः, तन्न; सर्ववारतिथीनां श्राद्धकालत्वेऽप्यावश्यक-श्राद्धकालत्वाभावात्। इदं तु तीर्थश्राद्धमावश्यकम्। तेनायमर्थः— यस्मिन्नपि काले प्रतिपदादौ श्राद्धमनावश्यकम् तदापि तीर्थप्राप्तिपक्षे श्राद्धमावश्यकमिति। अत्र केचिदाहुः—यत्र तु दैवगत्या सायाह्नादौ तीर्थलाभस्तस्य तत्प्राप्तिनिमित्तकश्राद्धबाध एव, तद्दिने विहितमुहूर्ताभावात्। उत्तरदिने च प्राप्तिनिमित्तत्वाभावादिति। वस्तुतस्तु तत्राप्युत्तरदिने चिरोदितमुहूर्तद्वयानन्तरं श्राद्धमुचितमेव प्राप्त्युत्तरविहितमुहूर्त एव श्राद्धविधानादिति। न च विलम्बो दोषाय, स्वय-मकरणात्। न चैवं प्राप्त्यनुपदं क्षते जाते तदन्तेऽपि तदापत्तिः? प्राप्त्यनन्तरविहितमुहूर्तस्य प्राप्तैरेव कर्त्तव्यमित्यनेन श्राद्धाधिकरणत्वेन विहितस्य व्यतिक्रमादिति।

पिण्डदानं ततः शस्तं पितॄणामतिदुर्लभम्।

अत्र श्राद्धाङ्गत्वेन पिण्डदाने प्राप्तेऽपि यत्र पृथक् पिण्डदानं विहितं तत्र पिण्डदानमात्रं कार्यमित्येव परं द्रष्टव्यम्। एकस्यां यात्रायामेकस्मिंस्तीर्थे प्राप्तिनिमित्तकमेकमेव श्राद्धम्, यात्राभेदे तीर्थभेदे चावर्तते, प्राप्तिनिमित्तकत्वात्। अत एव गयायामेकस्मिन् दिने नानातीर्थप्राप्तौ तन्निमित्तकनानाश्राद्धानीति।

तीर्थे त्र्यहोपवासः फलार्थः, न त्वावश्यकः, "तीर्थमभिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमव-गाहमानस्त्रिरात्रमुषित्वा सर्वपापेभ्यो विमुच्यते स्वस्तिमांश्च भवति" इति देवलवचनात्। एवञ्च त्रिरात्रोपवासत्र्यहतत्तीर्थस्नानानां सर्वपापविमुक्तिः स्वस्तिमत्त्वञ्च फलम्। आहृतः पूत आहवनीयो भवतीतिवदेकवाक्यतार्थं विस्पष्टान्वयात्, न तु प्रत्येकमन्वयः, वाक्यभेदापत्तेः। प्रयागे तु प्राप्तिदिवसे मुण्डनमुपवासश्चावश्यकः,

मुण्डनञ्चोपवासश्च।

इति वचनात्। केचित्तु सर्वत्र तीर्थे प्राप्तिदिने मुण्डनमुपवासं चेच्छन्ति।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा गयां गङ्गां विशालां विरजां तथा॥

इति स्कन्दपुराणीयवचने सर्वपदस्वरसात्, गयादिविशेषवचनाच्चेत्याहुः, तन्न; सर्वपदस्यासङ्कोचेऽतिप्रसङ्गात्।

तथा हि—

भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु।
यथा शरीरस्योद्देशाः केचित् पुण्यतमा मताः॥
तथा पृथिव्यामुद्देशाः केचित् पुण्यतमाः स्मृताः।
प्रभावादद्भुताद् भूमेः सलिलस्य च तेजसा॥

इति महाभारते तीर्थोद्देशे भीष्मवाक्ये सातिशयफलजनकस्य स्थलस्य तीर्थत्वाभिधानात्। न चेष्टापत्तिः, स्वदेशान्तर्गतप्रवस्रणादावपि वपनोपवासयोः सर्वदेशीयाचारविरोधात्। न च

सर्वतीर्थपदं विदेशतीर्थपरम्, मध्यदेशीयानां सकलशिष्टानुमतस्य प्रयागवपनस्य विरोधापत्तेः। न च येष्वेव महातीर्थेष्वविशेषतो मुण्डनं विहितं तत्परं सर्वतीर्थपदमिति वाच्यम्, प्रयागादन्यत्र तद्विधानाश्रवणात्।

अथ—

गङ्गां संप्राप्य यो धीमान् मुण्डनं नैव कारयेत्।
क्रिया तस्याक्रिया सर्वा तीर्थद्रोही भवेन्नरः॥
गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत्।
स कोटिकुलसंयुक्त आकल्पं रौरवं वसेत्॥
गङ्गां प्राप्य सरिच्छ्रेष्ठां कम्पन्ते पापसञ्चयाः।
केशानाश्रित्य तिष्ठन्ति तस्मात्तान् परिवापयेत्॥
यावन्ति नखलोमानि गङ्गातोये पतन्ति वै।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

इत्यादिवचनानां गङ्गायां प्रयागव्यतिरेकेणापि मुण्डनविधायकत्वमिति चेद् अस्तु तावदेवम्, तथापि बहूनां वचनानामनुपपत्तेः, प्रयागगङ्गयोरेव मुण्डनविधानाद् विशेषनिषेधानुपपत्तेश्च। नर्मदादौ पुरुषोत्तमादौ च मुण्डनस्यासाधनात्। न चैतद्विशेषवचनादेव तेषु मुण्डनम्, व्यवहारविरोधस्योक्तत्वात्। वस्तुतस्तु गङ्गामुण्डनविधायकानाममीषां कल्पतरुकारादिभिः सर्वैरेवालेखनेन निर्मूलतैव।

अथ—

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतेः।
आधाने सोमपाने च मुण्डनं सप्तसु स्मृतम्॥

भास्करक्षेत्रं प्रयागमण्डलमिति स्मृतिसमुच्चयलिखितवचनात्। "गङ्गायां मुण्डनम्" इति केचित्। तन्न,

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा गयां गङ्गां विशालां विरजां तथा॥

इति स्कन्दपुराणीयवचनेन गयागङ्गाविशालाविरजाव्यतिरिक्ते वपनं विदधता गङ्गायामर्थतो वपननिषेधात्। तर्हि षोडशि ग्रहणाग्रहणवद्विकल्पोऽस्त्विति चेद् भवेदेवम्, यदि विषयभेदेनाविरोधो न स्यात्। नन्वेवं तथाहि—

यावन्ति नखलोमानि वायुना प्रेरितानि वै।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम्॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते।

इत्यादिवचनानां गङ्गायां सकलमुण्डनविधायकानामविगीतशिष्टाचारोपलम्भेन प्रयागावच्छिन्नगङ्गापरत्वं निषेधवचनस्य च तदनवच्छिन्नगङ्गापरत्वमिति निश्चयात् । कथं तर्हि सर्वतीर्थेष्विति बहुवचनम् ? सर्वतीर्थपदस्य बहुव्रीहिणा प्रयागपरत्वे बहुवचनार्थबहुत्वस्याविवक्षितत्वात्, ग्रहं सम्मार्ष्टीतिवत् । कथं तर्हि गयादिविशेषनिषेधः ? इत्थं मौद्गश्चरुर्भवतीति विशेषविधिना निषेधे सिद्धे पुनरयाज्ञिया वै माषा इति माषनिषेधवचनं यथा प्रतिनिधिविधयापि 'माषाऽत्यन्तायाज्ञियाः' इत्येवं परम्, तथा गयादिवपननिषेधोऽप्यत्यन्ताप्राशस्त्यपर इति । सर्वतीर्थपदस्य प्रयागपरत्वे किं मानमिति चेत् ?

एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

इति प्रयागप्रकरणस्थं मत्स्यपुराणवचनमेव ।

यत्तु त्र्यहसङ्कल्पक्रोडीकृतेऽपि माघसप्तमीप्रातःस्नानादावसाधारणसङ्कल्पेन पुनस्तदैव प्रातःस्नानाचरणमिति, तदयुक्तम्, तदा सकृत् स्नानाचरणस्यैव विहितत्वात् । अन्यथा त्र्यहफलकामनायां तदानन्त्यापत्तेः । कथं तर्हि दिवा नानातीर्थलाभे आवृत्तिरस्तु, तद्विशेषवचनबलादेवेति । त्र्यहसङ्कल्पस्तु प्रातःस्नानमात्रविषय इति शिष्टाः । अत्र प्रातःस्नानमरुणोदयवेलायाम् "प्रातःस्नाय्यरुणकिरणग्रस्तप्राचीमवलोक्य स्नायात्" इति विष्णुवचनात् । यत्तु 'माकरभास्करोदये' इति प्रभृतिवचनश्रवणात् सूर्योदयकाले प्रयागे प्रातःस्नानमिति, तन्न, तस्य फलमात्रविधायकत्वेन कालाविधायकत्वात् । समीपलक्षणयैकवाक्यत्वे संभवति, वाक्यभेदस्यान्याय्यत्वात् ।

मकरस्थे रवौ माघे न स्नात्यनुदिते तु यः ।
कथं पापैः प्रमुच्येत कथं वा त्रिदिवं व्रजेत् ॥

इत्यादिबहुष्वनुदितश्रवणाच्च ।

मध्याह्ने स्नानं तु काम्यं प्रहरद्वयाभ्यन्तर एव "मध्याह्न एव कुर्वीत" इति वचनात् । अथ—

प्रयागे वपनं कुर्याद् गयायां पिण्डपातनम् ।
दानं दद्यात् कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥

किं गयापिण्डदानेन किं काश्यां मरणेन वा ।
किं कुरुक्षेत्रदानेन प्रयागे मुण्डनं यदि ॥

अत्र प्रयागमुण्डनं कुर्यादिति विधिः । तत्र फलाकांक्षायां रात्रिसत्रन्यायेनार्थवादिकमेव फलमुन्नीयते । तच्च किं गयापिण्डदानेनेत्यादिश्रवणाद् गयापिण्डदानजन्यफलसमफलकाशीमरणजन्यफलसमफलकुरुक्षेत्रजन्यफलसमफलकामोऽत्राधिकारी ।

इदन्तु चिन्त्यते—यद्यपि मुण्डनस्य परिवपनरूपतया तत्रार्थवादेन फलनिर्देशान्न विहिते वापेन फलान्वयः प्रतिभाति, वपनवापनयोर्भेदात् । तथापि विहितकर्मानुवाद्यर्थवादस्य तत्र फलमात्रसमर्पकतया विधेः प्राधान्याद् विहित एवात्र फलसम्बन्धः । नन्वेवं वप्तुरेव फलं स्याद्, न वाप-

यितुरिति चेन्न, विधेरपि वापनपरत्वात् । तेन कारयेदित्यत्र कुर्यादिति णिचो लोपेन निर्देशः । नन्वेवं णिज्गर्भितमेवार्थं स्फुटीकृत्य यथोक्तफलकामः प्रयागे वपनमहं कारयिष्ये इत्यभिलापः कार्य इति चेत् । सत्यम्; प्रकृतिवद्विकृतिरिति न्यायेन प्रकृत्यनुसारेण करिष्ये इति शब्दाभिलापोऽत्रोचितः । अत एव यत्र ऋत्विग्द्वारापीज्यानिर्वाह्यते तत्रापि यजेतेत्यादिविध्यनुरोधाद् यजमानो यक्ष्ये इत्यभिलपति, न तु याजयिष्ये इति केचित् । अत्रोच्यते, प्रकृतिवद्विकृतिरिति न्यायेन विकृतियागे प्रकृतिधर्मातिदेशः, न तु लौकिकवाक्ये आर्षवाक्यस्य शब्दनियमविधिर्बहुषु व्यभिचारात् । न च यथाश्रुतवीहार इति श्रवणाद् यदेव पदं श्रुतं तदत्याज्यमिति वाच्यम्, देवतापरशब्दस्यादृष्टोपयुक्तशब्दस्य च तथात्वात् । अयं त्वर्थपरशब्दः, अर्थस्यैव वापनस्यात्र देशितत्वात् । नन्वस्तु तथा, तथापि लुप्तणिजेव निर्दिश्यतां कुर्यादित्यत्रैवान्वयः स्यादिति चेत्, हन्तैवं परिवापनस्य देशितत्वेन "स्वायत्ते हि शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे" इति न्यायात् 'कारयिष्ये' इत्येवास्तु, 'यक्ष्ये' इत्येवं प्रयोगस्तु न दृष्टान्तः, वैषम्यात् । तत्र हि देवतोद्देशेन हविस्त्यागो यागः, स च यजमानकर्तृक एव, संविभागपूर्वकस्तु त्यागानुवादः । त्यक्तद्रव्यस्य प्रक्षेपफलको होमः, स एवर्त्विक्कर्तृकः, अत एवर्त्विजो याजका न तु यष्टारः, अत एव विश्वामित्रस्त्रिशंकुं याजयामासेति टीकापीति दिक् । एवं प्रयागावच्छिन्नगङ्गायामपि मुण्डनम् 'केशानां यावतीसंख्या' इत्याद्युक्तवचनात् ।

"यावन्ति नखलोमानि वायुना"

इत्यादिवचनात्, तत्रापि मुण्डनविधानात् । ननु प्रयागे मुण्डनञ्चोपवासश्चेति श्रुत्वा मुण्डनोपवासयोरेककालीनत्वं प्राप्यते, उपवासश्च तत्र प्राप्तिदिने कर्तव्य इति मुण्डनमपि तथास्त्विति चेत्, सत्यम्; उपवासमुण्डनयोर्द्वयोरपि तत्र प्राप्तिनिमित्तकत्वात् । तस्य च प्रयागमुण्डनस्य गङ्गामुण्डनेनैव काम्येन प्रसङ्गतो निर्वाहादिति । तत्र यत्तु काम्यं मुण्डनं तदनियतम्, अतो दिनान्तरे प्रयागमण्डलाभ्यन्तरे तदनुष्ठानम् । नन्विदं मुण्डनं केवलं काम्यं चेत्, स्नानवत् प्रतिदिनमापद्येत् । प्राप्तिनिमित्तकमिति चेत् ? प्रथमाहे एव क्रियेत, निमित्तकामनयोस्तदहरेव सन्निपातात्, समर्थस्य क्षेपायोगात् । अत्र केचित्—

संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद् यदि ।
मुण्डनञ्चोपवासं च नैव कुर्यात् प्रयत्नतः ॥

इति वचनादेकोपाधिप्रयुक्तमुण्डनं दशमासाभ्यन्तरे पुनस्तीर्थे न कर्तव्यम् । न चैवं प्रयागीयं प्रथममुण्डनमपि न स्यात्, तस्यापि तदवच्छिन्नगङ्गामुण्डनापेक्षया द्वितीयत्वादिति वाच्यम्, तस्य प्रयागविहितस्य प्रयागमुण्डनेन भिन्नाधिकारेण प्रसङ्गतस्तन्त्रतो वा निष्पत्तिरिति पृथगनुष्ठानस्य तत्रान्याय्यत्वादित्याहुः, तन्न; तत्तद्वचनस्यामूलकत्वात्, समूलकत्वेऽपि प्राप्तिनिमित्तकमुण्डनपरत्वात्, तन्निमित्तोपवाससाहचर्यात्, व्रजेदित्यभिधानाच्चेति ।

अथ स्त्रीणां प्रयागे प्राप्तानां मुण्डने प्राप्ते—

सर्वान् केशान् समुद्धृत्य छेदयेदंगुलिद्वयम् ।
एवमेव तु नारीणां मुण्डमुण्डनमादिशेत् ॥

इत्यादेः प्रायश्चित्तप्रकरणे श्रुतस्याकांक्षातौल्येनात्राप्यन्वयात् । प्रयागे तासां द्व्यङ्गुलकेशाग्रछेदनमात्रं मुण्डनमिति वदन्ति, तन्न;

केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् ।
तिष्ठन्ति तीर्थस्नानेन तस्मात् ताँस्तत्र वापयेत् ॥

इत्यादिना तीर्थे केशमूलवपनस्यैव विशिष्य विहितत्वादिति परमगुरुचरणाः । प्रयागे तु तीर्थोपवासे विश्वजिन्न्यायेन स्वर्गः फलमिति सांप्रदायिकाः । ब्रह्मलोकावाप्तिः फलमस्येत्यन्ये । वस्तुतस्तु नैमित्तिकतयैवोपवासानुष्ठानसंभवे विश्वजिन्न्यायेन फलकल्पने गौरवादयमुपवासो निष्फल एव, देशनाबलादिति तत्त्वम् ।

काम्ये प्रयागमरणे सर्ववर्णानामधिकारः । तदुक्तम्—

न वेदवचनाद् राजन् न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥

अस्य सर्वथा प्रयागमरणेऽनर्थशङ्का न कार्येत्यर्थः । यद्यपि कल्पतरुकृता प्रयागे मुण्डनं न लिखितम्, न वा प्रमाणमुपदर्शितम्, तथापि सकलदेशीयाचारोपष्टम्भाद्

गङ्गां प्राप्य सरिच्छ्रेष्ठां कम्पन्ते पापसञ्चयाः ।
केशानाश्रित्य तिष्ठन्ति तस्मात् तांस्तत्र वापयेत् ॥

इत्यादिवचनादेकं प्रयागावच्छिन्नगङ्गायां प्राप्तिनिमित्तकम् । द्वितीयं तु

केशानां यावती संख्या छिन्नानां जाह्नवीजले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
यावन्ति नखलोमानि वायुना··· ··· ···

इत्युक्तवचनात् प्रयागावच्छिन्नगङ्गायामेव स्वर्गफलकं काम्यम् । तृतीयं तु

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।

इति वचनात् प्रयाग एव प्राप्तिनिमित्तकम् । चतुर्थं तु

किं गयापिण्डदानेन

इति वचनात् प्रयाग एव मोक्षफलकम् ।

गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत् ।
स कोटिकुलसंयुक्तो ह्याकल्पं रौरवं वसेत् ॥

इत्यकरणे निन्दाश्रवणान्नित्यमपीति प्रयागमुण्डनं नित्यकाम्यम् । अत्र च प्रथमाह एव स्वर्गफलके क्रियमाणे नैमित्तकयोरपि प्रसंगादेव सिद्धिः, प्रसङ्गविरोधिनो विरहात् । मोक्षफलकं तु यदृच्छया दिनान्तरेऽपि क्रियत इति परमगुरुचरणाः । विद्यापतिचरणास्तु प्रसङ्गादेव नैमित्तिकयोः काम्ययोश्च तन्त्रेणैव । तेन स्वर्गफलकेनैव चतुर्णां प्रथमाह एव निर्वाह इत्याहुः, तन्न; कामनयोर्भावाभावरूपत्वेन युगपदसंभवात्, पृथगधिकारस्यैव न्यायसहत्वात्, प्रयागमुण्डनस्यापि स्वर्गफलकत्वे मानाभावात् ।

काश्यां वा मरणेन किम् ?

इति श्रुतेः । हन्त तथापि मोक्षफलकत्वेनैव नैमित्तिकयोः प्रथमाहे सिद्धिरस्तु, स्वर्गफलकमेव यदृच्छया क्रियतामिति चेन्न, भावरूपतया लघूपस्थितिकत्वाद् मोक्ष एव प्रथमतः

कामनोदये प्रथमाधिकार इष्ट एवेति। ये तु वर्षसहस्राणीति बहुवचनानुरोधात् प्रयागे बहुपदमिच्छन्ति, ते भ्रान्ताः। तथा हि—

"केशानां यावती संख्या"

इत्यादिसमभिव्याहारेण विभक्तीनामपि तावत्प्रत्यायकत्वेन बहुपदायोगात्। अत एव—

"अश्वमेधसहस्राणां सहस्रम्"

इत्यादिवाक्यप्रयोगे दशलक्षाश्वमेधजन्यफलसमफलप्राप्तिकाम इति सिद्धवल्लिखितमिति। ये तु—

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥

इति यथाश्रुतवचनानुरोधाद् धृतदण्डस्य न प्रायश्चित्ताधिकारः, न वा परलोकहानिरिति वदन्ति, ते भ्रान्ताः; प्रकृतवचनस्य प्रकरणात् प्रायश्चित्तरूपदण्डपरत्वात्। अत एव कल्पतरौ स्वर्णस्तेयमुसलाघातप्रकरण एव वाक्यमिदं लिखितम्। कण्ठतोऽप्याह नारदः—

अगम्यागामिनः शास्ति दण्डो राज्ञः प्रकीर्तितः।
प्रायश्चित्तिविधानं तु तदपि स्याद् विशोधनम्॥

## अथ वपनम्

आपस्तम्बः—

एषु चोदकपानं तावन्तं कालमनुभाविनाञ्च परिवापनम्।

अनु पश्चाद् भवन्तीत्यनुभाविनः कनिष्ठाः। तेन प्रेतकनिष्ठानां सपिण्डपुरुषाणां वपनमित्यर्थः।

अत्र वदन्ति—

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते।
आधाने सोमपाने च मुण्डनं सप्तसु स्मृतम्॥

इति परिसंख्यानश्रुतेः पुत्राणामेवाशौचान्ते वपनम्, न तु कनिष्ठसपिण्डानामपीति तन्न; "दशमेऽहन्यरण्यं गत्वा कृतश्मश्रुकर्माणः" इति हारीतेन 'अस्यां निष्क्रम्याशौचान्ते कृत श्मश्रुकर्माणः' इति विष्णुना चासंकुचितबहुविधवचनस्वरसेन कनिष्ठसपिण्डमात्रस्यैतद्विधानात्। परिसंख्यानस्याप्युपलक्षणत्वात्। न च 'श्मश्रुकर्माण' इति श्रवणात् तावन्मात्र परतैवास्तु ?

यस्य यस्य च वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः।
स तत्र वस्तुशुद्धिं च गृहशुद्धिं करोत्यपि॥
केशश्मश्रुनखादीनामत्याज्यं तज्जहात्यपि।

इत्येकवाक्यतयाऽनुभाविनां च वपनमिति स्मरणाच्च तस्योपलक्षणत्वात्। परदेशीयास्तु गङ्गायामित्यसंकुचितश्रवणाद्यत्र कुत्रापि गङ्गायां वपनमिच्छन्ति रटन्ति च—

गङ्गां संप्राप्य यो धीमान् मुण्डनं नैव कारयेत्।
क्रिया तस्याऽक्रिया सर्वा तीर्थद्रोही भवेन्नरः॥

गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत्।
स कोटिकुलसंयुक्तः ह्याकल्पं रौरवं वसेत्॥
गङ्गां प्राप्य सरिच्छ्रेष्ठां कम्पन्ते पापसञ्चयाः।
केशानाश्रित्य तिष्ठन्ति तस्मात् तांस्तत्र वापयेत्॥
यावन्ति नखलोमानि वायुना प्रेरितानि वै।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम्॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते।

तस्मादकरणेऽनिष्टश्रुतेः करणे फलश्रुतेश्च गङ्गामात्रे वपनमिति वदन्ति, तन्न; एतेषां निर्मूलत्वात्, समूलत्वेऽपि सङ्कोचात्। तथाहि—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा गयां गङ्गां विशालां विरजां तथा॥

इति स्कन्दपुराणीयवचनेन गङ्गामात्रे वपननिषेधात्। न च वपनविधिनिषेधयोर्विकल्पः, अनिष्टश्रुतौ प्रवृत्तिनिवृत्त्योर्विकल्पासम्भवात्। तस्मात्तीर्थराज एव गङ्गायां वपनमिति। न च सर्वतीर्थेष्वयं विधिरित्यत्र कर्मधारयो लाघवात्, स्वदेशीयप्रस्रवणादावपि वपनोपवासयोः प्रसङ्गापत्तेः। तस्मात् सप्तमीबहुव्रीहिणा प्रयाग एव मुण्डनं विधीयते। न च सर्वपदस्य प्रयागमात्र परत्वे बहुवचनविरोधः, उद्देश्यगतत्वेन संख्याया अविवक्षितत्वात्। ग्रहं संमार्ष्टीतिवद् बहुवचनं प्रयोगसाधुतामात्रार्थकम्। न च सर्वतीर्थपदस्य प्रयागपरतायां मानाभावः शक्तिग्राहकाभावादिति वाच्यम्,

एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम्।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

इति प्रयागप्रकरणस्थमत्स्यपुराणवचनस्य सत्त्वात्। हन्तैवम्, विशेषनिषेधानुपपत्तिः? अत्यन्तनिषेधे तात्पर्यात्, "अयज्ञिया वै माषाः" इतिवत्। न चैवमवच्छेदे वैपरीत्यमेवास्तु, विनिगमनाविरहात्? भ्रान्तोऽसि, सकलशिष्टाचारविरोधात्।

गङ्गायां भास्करक्षेत्रे पित्रोश्च मरणं विना।
वृथा छिनत्ति यः केशांस्तमाहुर्ब्रह्मघातिनम्॥

इति रूपनारायणधृतकालिकापुराणवचनाच्च। तस्मात् सकलपर्यालोचनया गङ्गा-वपनविधायकानि वचनानि प्रयागावच्छिन्नगङ्गापराण्येव, तदपवादकवचनानि गङ्गामात्रपराणीति सारम्। न चैकेन भूयसां कथं सङ्कोच इति वाच्यम्? शतमप्यन्धानां न पश्यतीति न्यायात्, एकेनापि बहूनां प्रतिरोधाच्च। अत एव स्मृतिसमुच्चये विष्णुः—

प्रयागे तीर्थयात्रायां पितृमातृवियोगतः।
कचानां वपनं कुर्याद् वृथा न विकचो भवेत्॥

तीर्थयात्रायां कार्पटीकवेषेण गयादिगमने चिकीर्षित आदौ वपनमित्यर्थः। पितृमात्रिति ज्येष्ठसपिण्डोपलक्षणमुक्तयुक्तेः। 'प्रयागे तु' इत्यधिकरणसप्तमी, उपपदविभक्तेः कारकविभक्ति र्बलीयसीति न्यायात्। अत एवावच्छेदे विनिगमनाविरहोऽपि परास्त इति दिक्।

प्रोक्षणमुत्तानपाणिना, अवोक्षणं तिर्यक्पाणिनाऽभ्युक्षणमधःपाणिना सर्वत्र कार्यम् ।

उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ।
तिरश्चावोक्षणं प्रोक्तं न्यञ्चताभ्युक्षणं मतम् ॥

इति वचनात् । एतत् त्रयं सकृदेव कार्यमावृत्तौ बीजाभावात् ।

## अथानध्यायाः

व्रताह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति ।
तद्दिनं स्यादनाध्यायो व्रतं तत्र न कारयेत् ॥

इति हारीतवचनादुपनयनदिनपूर्वदिने सायंसंध्यायां गर्जे उपनयनदिनमनाध्यायं करोतीत्यस्मत्पितामहचरणपवित्रीकृतः पन्थाः । अत्र वदन्ति पूर्वसन्ध्यापदेन प्रातःसन्ध्योच्यते । अत एव विष्णुपुराणे—

ततोऽखिलजगत्पद्मबोधायाच्युतभानुना ।
देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना ॥

इत्यत्र पूर्वसन्ध्यापदेन प्रातःसन्ध्यैवाभिधीयते । किञ्च रत्नसारशतकेऽपि—

पयोधरैश्छन्नतरं खमण्डलं दिवा निशं वा व्रतबन्धवासरे ।
प्रभातसन्ध्यासमये च गर्जितं तदा ह्यनाध्यायमुशन्ति सूरयः ॥

इत्यत्र व्रतबन्धदिनसन्ध्यागर्जनस्यैवानाध्यायहेतुत्वमुक्तम् । तत्र च सन्ध्यागर्जस्य सामान्यत एवानाध्यायहेतुत्वे हारीतस्यानुवादकत्वापत्तिरत्यन्तनिषेधे तात्पर्य्यात् । 'अयज्ञिया वै माषाः' इति वत् । अन्यथाधिकरणसप्तम्यर्थबाधापत्तेरिति तन्न, अत्यन्तनिषेधो ह्येकवक्तृके वैयर्थ्यात् । अत एव मौद्गश्चरुर्भवतीत्यनेन माषादिनिषेधे सिद्धे पुनरयज्ञीया वै माषा इति यदुपादानं तदत्यन्तनिषेधपरमिति सिद्धान्तः, भिन्नवक्तृके तु विधिनिषेधयोरनुवादकत्वमेव, 'प्रातः स्नातः सहाम्बरः' इतिवत् । रत्नसारलिखितं त्वनार्यमेवेति न किञ्चिदेतत् । प्रातःसन्ध्यावाक्यस्य तत्रोक्तसूर्योदयाधारत्वानुरोधेन प्रातःसन्ध्यातात्पर्य्यकत्वम्, अनन्यलभ्यस्य शब्दार्थत्वात् ।

"पूर्वां सन्ध्यां जपंस्तिष्ठेत्"

इत्यादिशङ्काविरोधापत्तेः । किञ्च प्रातःसन्ध्यागर्जनस्यानाध्यायहेतुत्वे प्रतिपाद्ये 'व्रताह्नि सन्ध्यायाम्' इत्येव हारीतो ब्रूयात्, सायंसन्ध्यागर्जनानन्तरमुपनयनाप्रसक्तेः । अतो विद्वः पूर्वसन्ध्यावाक्यस्य व्रतपूर्वदिनसायंसन्ध्यावाचकत्वमेव, षष्ठीसप्तम्योरभेदमादाय षष्ठीस्थान एव सप्तमीप्रयोगात् । तत्र च बाधेन विशेषणतायाः कवलनादगत्यैवोपलक्षणताया आश्रयणादिति ।

पौषादिचतुरो मासान् ज्ञेया वृष्टिरकालजा ।
व्रतयात्रादिकं कर्म वर्जयेत् सप्तवासरान् ॥

अत्रापि विशेषमाह—

एकेनैकदिनं त्याज्यं द्वितीयेन दिनत्रयम् ।
तृतीयेन तु सप्ताहं त्यजेदाकालवर्षणे ॥
वृत्तेऽप्यकालवर्षे नाशुद्धिर्निर्दिशेत् तावत् ।
यावन्न भवति याने नरपशुचरणाङ्किता वसुधा ॥

अत्रापि शुक्लादिश्चान्द्रो मासः, शिष्टाचारादौत्सर्गिकत्वाच्च। तेन पौषादिचान्द्र-मासचतुष्टये 'एकेन' एकदिनस्पृशा वृष्ट्या, 'एकदिनं' तदुत्तरदिनं त्याज्यमित्यर्थः। तथा 'द्वितीयेन दिनत्रयम्' अव्यवहितदिनद्वयस्पृशा वृष्ट्या तदुत्तरे त्र्यहः। तथा 'तृतीयेन सप्ताहम्' अव्यवहित-दिनत्रयस्पृशा वृष्ट्या तदुत्तरं सप्ताहं सौरवैशाखान्तर्गतोऽप्यशुद्धः, करणत्वानुरोधात्। उत्तरत्वं च वक्तव्यमेव। तथा च वृष्टिदिनमेवाशुद्धं न स्यादिति चेन्न, नाशुद्धिर्निर्दिशेत् तावदित्यादिना यावत्तावत्पदसमभिव्याहृतेन वृष्ट्यधिकरणदिनस्याप्यशुद्धत्वप्रतिपादनात्। हन्तैवमेतादृशवृष्ट्य-धिकरणदिनस्यैव करणत्वमस्तु, लाघवात्। भ्रान्तोऽसि ? सामानाधिकरण्य एव लाघवात्, तादृशवृष्टेरेवोभयत्र हेतुत्वात्।

यदाम्बुवृष्टिः कुलिशं पतत्यधो धराप्रकम्पोऽसुरकेतुदर्शनम्।
तदा विवाहव्रतबन्धनेषु विसर्जयेत् सप्तदिनानि शास्त्रतः॥

इत्यत्राम्बुवृष्टिः पततीति वर्त्तमानताश्रुतेश्च। अत्र वृष्टिदिनमेवादाय द्वित्रिसप्ताहगणनेति चेन्न, तृतीयार्थकरणत्वानुपपत्तेर्विध्यनुवादे वैषम्यापत्तेश्च। किञ्च दिनत्रयमित्यत्र दिनैकमित्येव ब्रूयात्। एवं तृतीयेन सप्ताहमित्यत्र चतुरहरित्येव ब्रूयादिति। ये तु

मासान् मार्गप्रभृतिमुनयो व्यासवाल्मीकिगर्गाः।
चैत्रं यावद्वर्षणविधौ नेति कालं वदन्ति॥
नाडीजङ्घः सुरगुरुमुनिर्वक्ति वृष्टेरकालम्।
मासावेतावशुभजनकौ पौषमाघावशेषौ॥

इति पठित्वा 'पौषादिचतुरो मासान्' इत्यत्र 'पक्षा वै मासा' इति वदन्ति। येऽपि

मार्गस्य पौर्णमास्यादावष्टकान्तामकालजाम्।
वृष्टिं केचिदिह प्राहुर्न माघे नापि फाल्गुने॥

इति पठित्वा व्यवस्थामिच्छन्ति, ते बहुविधविरोधभिधायिनः सकलशिष्टाचारविरोधात् केचिदिति श्रुतेश्चास्माभिरुपेक्षिता इति।

एकरात्रं परित्यज्य कुर्यात् पाणिग्रहं ग्रहे।
यात्रायां सप्तरात्रं तु त्रिरात्रं व्रतबन्धने॥
दिग्दाहे दिनमेकं च ग्रहे सप्तदिनानि च।
भूमिकम्पे समुत्पन्ने त्रिरात्रं परिवर्जयेत्॥
दृश्यते सिंहिकासूनुरुदितो गगने यदि।
यात्रादौ मङ्गले कार्ये सप्तरात्रं विवर्जयेत्॥
अरिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने।
सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमङ्गलम्॥
दर्शनादर्शनाद् राहोः केतोः सप्तदिनं त्यजेत्।
यावत् केतूदयस्तावदशुद्धः समयो भवेत्॥
धूमकेतौ समुत्पन्ने ग्रहणे चन्द्रसूर्ययोः।
ग्रहाणां सङ्गरे चैव न कुर्याद् मङ्गलक्रियाम्॥

तदेषां वचनानां समुदायार्थः, चन्द्रसूर्योपरागे मोक्षानन्तरमत्यन्तप्रौढकन्याया रजःसम्भावनायां तदहरेवाशुद्धः समयः। ग्रहणकाले शुद्ध एवादर्शनाभावादिति ॥

## अथोपनयनम्

ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूदयोल्कापतनादिदीपे।
व्रते दशाहानि वदन्ति प्राज्ञास्त्रयोदशाहानि वदन्ति केचित् ॥

"यदाम्बुवृष्टिः कुलिशम्" इति च।

अत्र वाक्ये सप्ताहान्वयः, तादृग् वृष्ट्यसुरकेतुदर्शनयोरेव संवादात्।

एकरात्रं परित्यज्य कुर्यात् पाणिग्रहं ग्रहे।
यात्रायां दिनमेकं तु त्रिरात्रं व्रतबन्धने ॥
नाकालवर्षविद्युत् स्तनितेष्विष्टं कथञ्चिदपि यानम्।
आसप्ताहाद् दिव्यान्तरिक्षभौमे तथोत्पाते ॥

अत्रेदं रहस्यं ग्रहणकाले भूकम्पोल्कापातकरकावज्रपातादिसमाहारे व्रतबन्धे त्रयोदशाहमशुद्धम्। किञ्चिदूनतत्समाहारे दशाहम्, ग्रहणमात्रे सप्ताहम्, 'तदा विवाहव्रतबन्धनेषु वर्ज्जयेत् सप्तदिनानि शास्त्रतः' इति प्रागुक्तवचनात्। निर्णये तु सप्ताहालिखनमन्यतः प्राप्तत्वादेव, न तु सप्ताहाशुद्धिबोधकवचनाभावादिति। यत्तु—

यात्रायां सप्तरात्रं तु त्रिरात्रं व्रतबन्धने।

इति। तदनेकवचनपर्यालोचनयातिप्रौढमाणवकविषयमेवेति। न च सप्तदिनानीत्यत्रैव व्रतबन्धातिरिक्तविषयतास्तु विनिगमकाभावादिति वाच्यम्, एवं बहुबाधापत्तेः, श्रुतबाधापत्तेश्च। नापि सकलसमाहारे त्रयोदशाहं किञ्चिदूनसमाहारे दशाहं समाहारमात्रे सप्ताहं ग्रहणाद्येकैकोदये त्र्यहम्, अश्रुतत्वाच्छ्रुतबाधापत्तेश्च। तत्रैव प्रौढमाणवकविषयकत्वस्य वक्तव्यत्वादिति दिक्।

यज्ञोद्वाहोपनयनादौ माङ्गल्यमात्रे त्वाह—

दाहे दिशां चैव धराप्रकम्पे वज्रप्रपाते कुविदारणे च।
धूमे तथा पांशुकरप्रपाते न कारयेन्मङ्गलकारिकार्यम् ॥
उल्कापाते च निर्घाते तथैवाकालवर्षणे।
छिद्रे सूर्ये च संदृष्टे न कुर्यान्मङ्गलक्रियाम् ॥
द्विसूर्यं रात्रिसूर्यं वा दृष्ट्वा गगनमण्डलम्।
रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत् ॥
उल्कापाते त्रितयं धूमे सप्तदिनानि च।
व्रजपाते दिनैकञ्च वर्जयेत् सर्वकर्मसु ॥
दिग्दाहे दिनमेकं तु ग्रहे सप्तदिनानि च।
भूमिकम्पे समुत्पन्ने त्र्यहानि परिवर्जयेत् ॥

एवं दिशां दाहे तदग्रिमदिनमेकमशुद्धम्, दिग्दाहे दिनमेकमित्युक्तवचने निमित्तसप्तमीबलात्, भूमिकम्पे तु तद्दिनादेवाशुद्धम्,

भूमिकम्पे समुत्पन्ने त्र्यहाणि परिवर्जयेत् ।

इति श्रुतेः । उल्कापाते तद्दिनादेवाशुद्धम्, उल्कापाते दिनत्रयमिति श्रुतेः । वज्रपाते तद्दिनमेव, वज्रपाते दिनमेकमिति वचनात् । एवं चानुक्तकालिके धरादिविदारणे पांशुवृष्टौ निर्घाते च सूर्यच्छिद्रे द्विसूर्ये त्रिसूर्ये वा गगने रात्रौ शक्रधनुर्दर्शने ग्रहयुद्धे वा रुधिरादिवर्षणे दिव्यभौमान्तरिक्षत्रिविधोत्पातेऽरिष्टे सिंहिकासूनुदर्शने—

सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमङ्गलम् ॥

तथा—

नाकालवर्षस्तनितेष्विष्टि कथञ्चिदपि यानम् ।
आसप्ताहाद् दिव्यान्तरिक्षभौमे तथोत्पाते ॥

इत्येवान्वीयते, उभयोरपि परिभाषारूपत्वेन लघूपस्थितिकत्वात्, व्यवस्थान्तरे चानध्यवसायात् । न च भूकम्पाद्यपेक्षया विषमशिष्टता, विधेर्दुर्लङ्घ्यत्वादिति ।

गुरोर्महातिचारे तु—

अतीचारगतो जीवः पूर्वभं नेति चेत् पुनः ।
नष्टः संवत्सरो ज्ञेयस्सर्वकर्मसु गर्हितः ॥

कृत्वातिचारं यदि पूर्वराशिं नायाति मन्त्री विबुधाधिपानाम् ।
यानं विवाहं व्रतबन्धगेहं सर्वं तदा हन्ति मतं मुनीनाम् ॥

पूर्वराशिं यदा त्यक्त्वाऽपूर्णे संवत्सरे गुरुः ।
अपरं राशिमायाति लुप्तकालः स उच्यते ॥
अताचारगतो जीवः पूर्वभं नैव गच्छति ।
नाचरेत् तत्र कर्माणि तदा तत्रैव संस्थिते ॥

अत्र च—

शुभं भवनमासाद्य यदातिक्रमते गुरुः ।
तत्र संवर्द्धिता कन्या सुखं भर्त्रा प्रमोदते ॥
अतीचारगते जीवे वृषे वृश्चिककुम्भयोः ।
तत्र चोद्वाहिता कन्या संपूर्णीयात् कुलद्वयम् ॥
कन्यावृश्चिकमेषेषु मन्मथे च वृषे झषे ।
अतीचारेऽपि कर्तव्यं विवाहादि बुधैः सदा ॥

वक्रातिवक्रावथवातिचारं करोति जीवो जगतो हिताय ।
यदा यदाप्याह शुभेऽपि लग्ने शुभाय पाणिग्रहणं वशिष्ठः ॥

इत्यादीनि वचनान्यपवादकानि निर्मूलान्येवेति वज्रलेपायितमिति दिक् । मकरस्थबृहस्पतौ—

देवागारतडागेषु प्रपोद्यानगृहेषु च ।
सिंहस्थं मकरस्थं च सर्वारम्भे गुरुं त्यजेत् ॥

नीचस्थः सिंहगो वा यदि भवति गुरुः सूर्यरश्मौ च लीनः
संयुक्तो वा यदा स्याद् दशशतघृणिना क्षीणरूपोऽथ बालः ।
यात्रां गेहं विवाहं व्रतममरगृहं यज्ञचूडादिसर्वम्
वापीमुद्यानकूपं न भवति शुभदं यच्चदिष्टं च लोके ॥

अत्रापि—

मकरस्थो यदा जीवो वर्जयेत् पाञ्चमाह्निकम् ।
शेषेषु च तथाहस्सु विवाहः शोभनो मतः ॥

इत्याद्यपवादकं वचनं च निर्मूलमेवेति तत्त्वम् ।

वापी-कूप-तडाग-याग-भवनं क्षौर-प्रतिष्ठा-व्रतम्
विद्यामन्दिर-कर्णवेधन-महादानं बलं सेवनम् ।
तीर्थस्नान-विवाह-देवभवनं मन्त्रादिदेवेक्षणम्
दूरादेव जिजीविषुः परिहरेदस्तंगते भार्गवे ॥
अनादिदेवतान् दृष्ट्वा शुक्रस्युर्नष्टभार्गवे ।
मलिम्लुचेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत् ॥
अस्तमिते भृगुतनये कन्या म्रियते वरश्च वागीशे ।
स्यादुभयोरपि मरणं केतावुदिते करग्रहणे ॥
उपनयनं गोदानं परिणयनं गृहप्रवेशौ च ।
अस्तमितेषु न कुर्यात् सुरगुरुभृगुचन्द्रपुत्रेषु ॥
अस्ते शुक्रे धनुर्मीने सिंहादित्ये तथा गुरौ ।
चूडोद्वाहप्रतिष्ठाश्च व्रतादीन् नैव कारयेत् ॥
अस्तंगते भृगुसुते समस्तदिग्देवता यत्र ।
वेश्मक्रियाप्रवेशः क्षौरोद्वाहो परीक्षा च ॥
प्रतिष्ठां च परीक्षां च व्रतोद्वाहादिकर्म च ।
नष्टे वृद्धे तथा बाले न कुर्याद् भृगुनन्दने ॥
गुर्वादित्ये गुरौ सिंहे शुक्रे चास्तमुपागते ।
नाधिष्ठानवतीं पश्येद् देवतामादितो नरः ॥
बाले शुक्रे वृद्धे शुक्रे जीवे बाले वृद्धे जीवे ।
जीवे नष्टे जीवे सिंहे सिंहादित्ये गुर्वादित्ये ॥

बालो दशाहाभ्युदितः परेण पूर्वेण बालो दिवसत्रयेण
वृद्धस्तु पूर्वेण सपक्षमेकं पश्चात् स्थितः पञ्चदिनानि शुक्रः ।
प्रागुद्गतः शिशुरहस्त्रितयं सितः स्यात् पश्चाद्दशाहमिह पञ्चदिनानि वृद्धः
प्राक् पक्षमेव गदितोऽत्रिवसिष्ठमुख्यैर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः ॥

पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम् ।
पक्षं वृद्धस्तु पूर्वस्यां दशाहं पश्चिमे स्थितः ॥

अग्न्याधानं प्रतिष्ठां च यज्ञदानव्रतानि च।
देवव्रत - वृषोत्सर्गं - चूडाकरण - मेखलाः ॥
मङ्गल्यमभिषेकं च मलमासे विवर्जयेत्।
तथा मलिम्लुचे मासि सुराचार्येऽतिचारणे।
वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत्॥
अतीचारगते जीवे वक्रे तत्रैव सिंहगे।
बाले वृद्धे तथा नष्टे विवाहो न प्रशस्यते॥
अतीचारगते जीवे वक्रे चास्तमुपागते।
व्रतोद्वाहो न कुर्वीत जायते मरणं ध्रुवम्॥
अतीचारगते जीवे वक्रे चैव बृहस्पतौ।
कामिनी विधवा प्रोक्ता तस्मात् तौ परिवर्जयेत्॥
वक्रे चैवातिचारे च वर्जयेत् तदनन्तरम्।
व्रतयात्रादिकं कार्यमष्टाविंशतिवासरान्॥

पक्षो (१५) दशाहानि (१०) तथा त्रिपक्षं (४५) मासत्रिभागः (१०) खलु षट् च मासाः
एषोऽतिचारः कथितो ग्रहाणां भौमादिकानामितरस्तु चारः।
पक्षो (१५) दशाहानि (१०) तथैव सार्द्धं मासान् दशाहं खलु षट् च मासान्
भौमादिखेटास्त्वतिचारवक्रे दद्युः फलं पूर्वगृहे यदुक्तम्॥

वक्रातिचारे सुरराजमन्त्री यदा गतस्तत्र फलं ददाति।
विवाह - चूडाव्रत - कर्णवेध - सुरप्रतिष्ठार्थगृहप्रवेशाः ॥

सुवर्णशंखाद्युपयोगिविद्याः सिंहे सुरेज्ये न च शोभनाः स्युः।

सिंहगुरौ परिणीता स्त्री पतिपुत्रादिकं हन्ति।
क्रमशस्त्रीन् पित्रादीन् वशिष्ठगर्गादयः प्राहुः॥

अस्तम्प्रयाते च भृगौ गुरौ वा सूर्ये हिमांशौ च तथा प्रविष्टे।
न कूपवाप्यादिकमन्दिरार्थं शुभं प्रदिष्टं धनकीर्तिनाशात्॥

गुर्वादित्ये गुरौ सिंहे न शुक्रे न मलिम्लुचे।
याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्॥
उदिते दशरात्रं तु क्षीणे चैव चतुर्दश।
वर्जनीयं प्रयत्नेन गुरुशुक्रोदये तथा॥
भवेत् संध्यागतः पश्चादस्तमेष्यन् दिनत्रयम्।
दिनानि पञ्च पूर्वेण तत् कृतं कर्म वर्जयेत्॥
बालभृगौ परिणीता युवत्यसाध्वी भवत्यवश्यमिदम्।
वृद्धे तस्मिन् वन्ध्या अस्ते मृत्युं समभ्येति॥
बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत्।
नष्टे मृत्युमवाप्नोति सत्यमेतद् गरावपि॥

कर्णवेधं तथा क्षौरं विवाहं व्रतबन्धनम्।
गुर्वादित्येन कुर्वीत पुत्रदारधनक्षयात्॥
गुर्वर्कयोगसमये शोभनवाल्मीकिगोतमप्रमुखैः।
व्रतयज्ञार्था ब्राह्मणशुभप्रदा कीर्त्तिता मुनिभिः॥
गुर्वर्कयोगे युवतीविनाशो यद्येकऋक्षे यवना वदन्ति।
अस्तंगते देवगुरौ वामा हारीतपूर्वाश्च तथा वदन्ति॥
विवाहादि न कुर्वीत सिंहे यावद् गतो गुरुः।
वक्रातिचारे च गुरौ सिंहे चार्कयुते तथा॥
जातु तत्र न कुर्वीत यात्रोद्वाहव्रतानि च।
सिंहसंस्थं गुरुं शुक्रं सर्वारम्भे विवर्जयेत्॥
आरब्धं वा न सिद्धयेच्च महद् भयकरं भवेत्।
पुत्रभ्रातृकलत्राणि हन्याच्छीघ्रं न संशयः॥
कारको व्रजते नाशं सन्तानः क्षीयतेऽचिरात्।
यथा सिंहस्थिते जीवे तथैव मकरस्थिते॥
देवारामतडागानि प्रपोद्यानगृहाणि च।
विवाहादि महाभाग ? महाभयकरं भवेत्॥
सर्वत्रैव स्थितः श्रेष्ठो देवराजपुरोहितः।
नीचस्थोऽर्कगृहस्थश्च सर्वकर्मविदूषकः॥

अत्र च—

अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे।
मलिम्लुचेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत्॥

इत्यनेन प्रथमं क्रियमाणस्य तीर्थस्नानस्य शोकजनकत्वं प्रतिपाद्यते। तच्च—

नित्यनैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च॥

इत्यनेन चाभ्यासापन्नं तीर्थस्नानं पर्युदस्यते, तथैव व्युत्पत्तेः। किञ्च तस्यैव प्रक्रान्ततया लाघवेन तन्मात्रपर्युदासस्यैव वक्तव्यत्वात्, न त्विष्टसाधनत्वस्य विध्यर्थत्वेन फलाजनकमपि पर्युदस्यते।

दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्।
नपुंसकत्वं भवति न तु पौषस्य कुत्रचित्॥

इत्याद्यसंकुचितविरोधात्, विधेरेवमप्यक्षतेः। अत एव तत्तत्फलकामनया मलमासेऽपि तीर्थस्नानं क्रियत एवेति भ्रमो हेय इति दिक्।

मार्कण्डेयपुराणे—

उद्वहेत् पितृमात्रोस्तु सप्तमी पञ्चमी तु या।

विष्णुपुराणे—

पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम्।
गृहस्थ उद्वहेत् कन्यां न्याय्येन विधिना नृप॥

हारीतः—

"तस्मात् कुललक्षणविज्ञानोपपन्नां वरयेत्। पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः।"

इति ऋजुसूत्रानुसारात्।

पितृतः सप्तमीं मातृतः पञ्चमीं कन्यां वरयेत्।

इति परलोकशून्यास्तन्मन्दम्। तथाहि गोतमः—

असमानप्रवरैर्विवाह ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यः, मातृबन्धुभ्यः पञ्चमात्॥

'बीजिभ्यश्च' इत्यत्रापि सप्तमादिति योज्यम्। एषां यः सप्तमः पञ्चमो वा अत ऊर्द्ध्वं विवाहः। समानप्रवरत्वं च संख्यासंज्ञयोस्तुल्यत्वेन, यथा वत्ससावर्ण्ययोः। और्वादीनां च पञ्चतया, संज्ञया चौर्वादिरूपतया। अत एव पितृमातृपक्षोऽपि मातृपक्ष एवेति परास्तम्, 'पितृबन्धुभ्यः' इति श्रुतेरुत्तरवचनविरोधाच्च।

याज्ञवल्क्यः—

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।
पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा॥

यथासंख्यमन्वयः। भ्रातृमतीमिति पुत्रिकाशङ्कानिवृत्तये।

पैठीनसिः—

असमानार्षेयीं कन्यां वरयेत् पञ्चमातृतः परिहरेत् सप्त पितृत इति त्रीन् मातृतः पञ्च पितृत इति वा।

समानजातीया विवाहे पञ्च मातृतः सप्त पितृतः। असमानजातीया विवाहे त्रीनित्यादि-व्यवस्थितो विकल्पः। अत्र च मातृसगोत्रा निषेधो मातृसम्बन्धित्वेन जन्मपरम्परानाम्नोः प्रत्यभिज्ञायाम्, तदाह व्यासः—

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि।
जन्मनाम्नोरविज्ञाने उद्वहेताविशङ्कितः॥

सुमन्तुः—

पितृमातृसम्बन्धा आसप्तमादविवाह्याः कन्या भवन्ति। आपञ्चमादन्येषाम्। सर्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलास्तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ताः परिणीताः सङ्करात्मकाधर्मकारिण्यः। तथाध्यापयितुरेतदेव।

आसप्तमादिति मातृसपिण्डाविषयम्।

मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः।

इति व्यासवचनात्।

मनुरपि—

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥

भ्रातरः सहोदरा एव, भ्रातृपदस्य तत्रैव शक्तेः। यत्तु तद्दौहित्री परिणेतुमर्हैव, अपवादकाभावात्। न च तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानीत्येवापवादकमिति वाच्यम्, 'ता न परिणेतव्याः परिणीताः संकरकारिण्यो भवन्तीत्यनेन' तद्दुहितुरेव विवाह्यत्वनिषेधात्। न हि तदपत्यानि 'ता' इत्यनेन प्रत्यवमष्टुं शक्यन्ते, अनुशासनविरोधात्। किमर्थं तर्हि तदपत्यानि भागिनेयानीति चेत्, तदपत्यनिन्दार्थमेव, तथा च तद्दुहितरो न विवाह्या इत्ये वर्तुलार्थं इति। तत्तुच्छम्, न तदपत्यानि भागिनेयानीति श्रुतेरिति। एषामनन्तराभिहिताः कन्याः परिणीताः संकरात्मकाधर्मकारिण्यो भवन्ति। तथाध्यापयितुस्तद्विवाहजनकमन्त्राध्यापयितुः 'एतदेव' संकरकारित्वमेव।

तदेतेषां वचनानां पर्यालोचनया पुराणयोर्हारीतस्य च व्यवच्छेदपरत्वमेव। न चाश्रुतत्वान्न व्यवच्छेदपरत्वमिति वाच्यम्, गोतमादिवचने व्यवच्छेदस्य कण्ठत एवोक्तत्वाद् द्वयोरेकमूलकत्वानुरोधात्। किञ्च, विवाहस्य धनार्जनवद्रागप्राप्ततया विधेयत्वाभावात्। सर्वत्र व्यवच्छेद एव वाक्यार्थः, न चानयोर्विकल्पो गौरवाद् बाधसापेक्षता-पत्तेश्चेति दिक्।

पञ्चमाब्दाद् गुणवद्वराय कन्यादानमविरुद्धमेव, तदुक्तं नवमाध्याये मनुना—

उत्कृष्टायाभिरूपाय वराय सदृशाय च।
अप्राप्तामपि तां कन्यां तस्मै दद्याद् यथाविधि॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।

इत्यनेन व्रते पञ्चमाब्दे प्राप्ते 'वैवाहिको विधिः स्त्रीणां औपनायनिकस्मृतः' इत्येकवाक्यतया स्त्रीणामपि विवाहे तत्कालत्वसिद्धिः। 'गौरीं वाप्युद्वाहयेत् कन्याम्' इत्यस्य गुणपरत्वात्। यत्तु—

काममामरणात् तिष्ठेद् गेहे कन्यर्त्तुमत्यपि।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥

इति यथाश्रुतमनुग्रन्थानुरोधाद् सञ्जातरजस्कामपि मैथिलातिरिक्ताः प्रयच्छन्ति, तदतिहेयम्।

पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति॥

इति शंखवचनपर्यालोचनया मनुवचनस्य 'वरं विषं भुंक्ष्वे' तिवदर्थात्। अत एव कण्ठतोप्याह मनुः—

पित्रे न दद्याच्छुल्कं तु कन्यामृतुवतीं वहन्।
सा च स्वाम्यादतिक्रामेद् ऋतूनां प्रतिरोधनात्॥ इति॥

# अथ नामद्वैतम्

एकादशे द्वादशे वाऽह्नि पिता नाम कुर्यादिति कात्यायनसूत्रे नामकर्मणः सकृत् कर्तव्यत्वेनोभयोरपि दिनयोरधिकरणत्वमनुपपन्नम्, अतो विकल्पः; तत्रापि बाध्यत्वबाधकत्व-बाध्यबाध्य.व-बाधकबाधक.वदोषाणां चतुर्णामुभयोरपि दिनयोर्द्विपर्यागतानामष्टदोषाणां ग्रासान्नैच्छिको विकल्पः, किन्त्वेकादशदिनासम्भवे द्वादशदिनविधिरिति विकल्पो व्यवस्थितः। न चैवं व्रीहियवयोरप्यैच्छिको विकल्पो न स्यात्। भ्रान्तोऽसि ! तत्र हि साधनताविशेषस्य श्रुतत्वेन विनिगमनाविरहादैच्छिको विकल्प इति सर्वतन्त्रसिद्धान्तात्। हन्तैवम्, कालेऽप्येवमस्त्विति चेन्न, कालस्यानुपादेयत्वात्, द्रव्यस्य चोपादेयत्वादिति। कारणताग्राहके चोभयोः शब्दतो नञर्थाप्रवेशो विकल्पः, तत्रापि युगपदुपादेयतायामैच्छिकोऽनुपादेयतायां व्यवस्थितः। एवमपरपक्षे पञ्चम्यादिविकल्पोऽपि व्यवस्थित विकल्प एव, कण्ठतोऽत्राभावाप्रवेशात्। यथोक्तवस्त्वसंपत्तावित्यादौ तु न विकल्पः, किन्तु शब्दत एवाभावप्रवेशेन प्रतिनिधित्वं पूतिकावत्। अत एव मुख्याभावे तदुपादानं संगच्छते, विकल्पे तदभावापत्तेरिति तत्त्वम्। एवं च सर्वत्रैव हव्ये कव्ये शर्मान्तं नाम प्रयोज्यम्, अपवादकाभावादिति।

'अत्रापवादकं पठन्ति, तथाहि—

सपिण्डीकरणं यावत् प्रेतः प्रेत इति स्मृतः।
सपिण्डीकरणादूर्ध्वं शर्मवर्मादिभाग् भवेत्॥

इति वचनस्य प्रामाण्यं मन्वानः प्रेतश्राद्धे शर्मादिपदं नेच्छन्ति, तदयुक्तम्, एतद्वचनस्याज्ञातमूलत्वेन सन्दिग्धमूलत्वेन निर्मूलत्वेन वा सर्वथैवाप्रमाणत्वात्। प्रमाणत्वे वा

सपिण्डीकरणं श्राद्धं देवपूर्वं निवेदयेत्।
पितॄनेवाशयेदत्र पुनः प्रेतं न निर्दिशेत्॥

इति शातातपवचनैकवाक्यतया तद्वहिर्भावमात्रे तात्पर्यात्, अन्यथा—

प्रेतन्तु नामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्।

इत्यस्य बाधापत्तेः। नामोपपदशर्मपदाभ्यामेव निर्मितम्। अत एवोपनयने को नामासीति प्रश्नेऽमुकशर्माहमित्युत्तरं कात्यायनसूत्रे संगच्छते। किञ्च, ब्रह्मचारिप्रश्ने श्रुतिरपि 'इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यः श्रीअमुकशर्मन्निति दिक्।

ननु ससंप्रदानको हि त्यागो दानम्। देवतोद्देश्यको हविस्त्यागो यागः। स एव प्रक्षेपावच्छिन्नो होमः। एतत्त्रितयभिन्नस्तु त्याग उत्सर्गः। तत्रापि ब्राह्मणायेति कारकचतुर्थीप्रयोगः क्रियते, स च कथं स्यात्? संप्रदानस्य कारकविशेषत्वात्। तत्र भविष्यद्द्रव्यप्रतिग्रतिभागिनः प्राक्स्वीकरणाविरहेण कारकत्वाभावेन चतुर्थ्यर्थान्वयायोगादिति चेत्, अकारकेऽपि कारकप्रयोगो भवत्येवेति मतमाश्रित्य ब्राह्मणायेति कारकचतुर्थीप्रयोगकरणात्। अत एव वह्निमनुमिनोमीत्यत्राकारक एव वह्निमिति कारकद्वितीयाप्रयोगः, न हि वह्नेरनुमितौ कारकत्वमनुमितेर्विषयाजन्यत्वादिति।

अप्रतिपत्तिके दाने प्रतिपत्त्यनन्तरमेव दक्षिणा, दानानन्तरमेव दक्षिणादानावसरात् । सप्रतिपत्तिके तु परस्वत्वोत्पत्तेरनुपदसिद्धत्वादिति । एवमनृत्विक्के श्राद्धादौ दक्षिणादानं न कर्तव्यमृत्विगानतिद्वारा परम्परया तस्य प्रधानाङ्गत्वादतः ऋत्विगभावे द्वारबाधाद् दक्षिणाबाधस्याप्युचितत्वात् । अत एव कृष्णलं चरुं श्रपयेदित्यत्र तुषत्राधेन प्रकृतिप्राप्तावघातबाधः शास्त्रियः, अत एव सत्रेऽपि न दक्षिणेति प्राभाकराः। तन्न; न हि दक्षिणायाः परम्परया श्राद्धाङ्गत्वम्, किन्तु—

हतमश्रोत्रिये दानं हतो यज्ञस्त्वदक्षिणः ।
तस्मात् पणं काकिणीं वा पत्रं पुष्पमथापि वा ॥
प्रदद्याद् दक्षिणां सर्वां तस्मात् स सफलो भवेत् ।

इति वचनात् ।

सत्रे तु यष्टॄणामेव ऋत्विक्त्वेनाभेदाद् देवताधिकरणविरोधेन दक्षिणादानस्य निरस्तत्वादिति । वैश्वदेवहोमे कात्यायनीयस्वाहाकारैरिति विशेषोपदेशबलेनान्यत्र सर्वत्र इदमग्नये इत्यादित्यागानुवादः प्रामादिक एव । तेनेदमग्नय इत्यादि-ऋत्विक्कर्तृकः प्रयोगो निर्मूल इति निर्णयलिखनं बह्वृचादिपरतयैव नेयम् ।

ऋग्वेदे तावदष्टौ वारुणा मन्त्राः, तत्राद्यैश्चतुर्भिश्चतुर्दशधाऽऽवृत्तैरन्यैश्चतुर्भिस्त्रयोदशधाऽऽवृत्तैरष्टोत्तरशतमाहुतयो भवन्ति । एवं पुनरावृत्तैरेवाष्टोत्तरशतं समिदाहुतयः संभवन्ति । त्वदुक्ते च क्रमे षोडशाधिकानां शतद्वयानामाज्यसमिदाहुतीनामेकैकस्मिन्नेव मन्त्रेणाज्यसमिदाहुतीनां सप्तविंशतावाहुतिषु मन्त्राष्टके विभागसिद्धावाज्यसमिधोः संख्यावैषम्यं स्यादिति । न च त्वदुक्ताज्यसमिदाहुतिविभागवदस्माकमपि विभागोऽस्त्विति वाच्यम्, परेषां तादृशविभागाभ्युपगमेऽनिष्टापत्तेरिति रहस्यम् । एवमथर्ववेदे चतुर्मन्त्रक इत्युपसंहार इति ।

मत्स्यपुराणम्—

कनकालंकृतां कृत्वा जले गामवतारयेत् ।
सामगाय च सा देया ब्राह्मणाय विशाम्पते ॥

न चात्र कनकालंकृतामिति विशेषोपदेशाद् विशेषणान्तरत्यागः, अस्य च बह्वृचगृह्योक्तसकलोपलक्षकत्वात्, एकमूलकत्वे द्वयोः कल्पनालाघवात् । मूलान्तरकल्पने च वैदिकमन्त्रस्यापि बाधापत्तेः, तथा च बह्वृचगृह्यपरिशिष्टम्—"सचेलकण्ठां हेमशृंगीं रूप्यखुरां वृषप्रजां कांस्योपदोहां विप्राय दद्यादितरां वा शन्ततो दक्षिणेत्येवं चैवापौरुषदेवता तुभ्यं सामगाय मया दत्तेति ।" प्रतिपत्तिरूपत्वाच्च न दक्षिणेति यद्धर्मंकरलिखनं तदुभयमपि चिन्त्यम्, श्रुतवाक्यभङ्गापत्तेः । न चार्थवादाभावादुभयबाधोऽस्तु, तदभावस्याकिञ्चित्करत्वात्, कार्तिक्यां वृषोत्सर्गात् प्रागपूपत्रयदानवत् । न च विश्वजिन्न्यायात् स्वर्गः फलम्, अधिकृताधिकारकत्वभङ्गापत्तेः । तस्माद् गलेपादिकयापि कामनां विनैव तस्याः प्रतिग्रहत्वेन सामगाय दानं दक्षिणादानं च ।

तदित्थमत्र प्रयोगः—"ओं सोपकरणसवत्सगव्यै नमः" इति त्रिः, 'ओं ब्राह्मणाय नमः' इति च त्रिः संपूज्य "ओं इमां सोपकरणां सवत्सां गां ददानीति द्विजकरे जलं दत्वा" "ओं ददस्वे" ति तेनोक्ते गां सिक्त्वा कुशादिकमादाय ओं अद्यामुकमासीयामुकपक्षीयामुकतिथौ सचेलकण्ठां काञ्चन-

शृंगीं रूप्यखुरां कांस्योपदोहां कनकपट्टिकालंकृतां सवत्सामिमां गां रुद्रदैवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय सामगाय तुभ्यमहं संप्रददे, इति दत्वा दक्षिणां च दत्वा स्वस्ति वाचयेत् कामस्तुतिं च।

गवां पुच्छं गृहीत्वा तु सहिरण्येन पाणिना।
गृहस्थो वेदविद्विप्रो वाचयेत्तु प्रतिग्रहम्॥

इति दानकाण्डलिखितवचनात्।

वैकृतो हि विशेषोपदेशः प्राकृतं धर्मं क्वचिदन्यथयति, यथा शरमयं बर्हिर्भवतीत्यत्र। क्वचिल्लुंपति, यथा परिसमुह्योपलिप्योल्लिख्येत्यादिना प्राप्तसकलेतिकर्तव्यतास्थाने पर्युक्ष्य जुहुयादित्यत्र पर्युक्षणमात्रविधिः। क्वचित् सकलस्थाने तदेव विधत्ते, यथाऽऽघारमाघारयति, आज्यभागौ जुहोतीति चातुर्मास्येष्टौ परिसमूहनादौ सत्येव होमान्तरस्थानेऽप्याघाराज्यभाग-मात्रविधिवत्। अत एवोदाहरणयोर्भेद इति।

एवं दिनानि होतव्यं चत्वारि द्विजपुंगवैः।

इति मत्स्यपुराणवचने कालाध्वनोरत्यन्तसंयोग इत्यनुशासनसिद्धात्यन्तसंयोग-द्वितीयाबलात् त्यक्तद्रव्यापहारेऽपि प्रतिपत्तियागत्वे सत्यपि द्रव्यान्तरानुष्ठानेन चतुरह्व्यापि-होमसमापनम्, अन्यथाऽत्यन्तासंयोगे तु 'मासस्य द्विरधीते' इति, 'संवत्सरस्य द्विरधीते' इति प्रत्युदाहरणं न्यासकारोऽप्याहेति।

देवीपुराणे—

होमो ग्रहादिपूजायां शतमष्टाधिकं भवेत्।
अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते॥
अष्टोत्तरसहस्रं वा तत्संख्या परिकीर्त्तिता।

इयं च होमसंख्या शक्त्यनुसारेण वैकल्पिकी द्रष्टव्या, तेन मुख्यकल्पे शक्तस्य नानुकल्पेऽधिकारः।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न साम्परायिकं तस्य दुर्मतेर्जायते फलम्॥

इति मनुविरोधात्।

यद्यपि तडागे होमेऽष्टोत्तरशतमष्टोत्तरसहस्रं वा संख्या नान्वेति, असंभवात् तथा हि न ह्येकेनैकस्यामधिवासनरात्रौ ब्रह्मणापि तावत् संख्यया होमः कर्तुं शक्यते, तथाप्यष्टाविंशतिसंख्ययाऽष्टसंख्यया वा शक्त्यनुसारेण होमः कार्यः, तेन सर्वथैव वारुणहोमादारभ्य विश्वकर्महोमपर्यन्तमेकैव संख्या, अविशेषात्। ननु—

जुहुयाद् वारुणैर्मन्त्रैराज्यानि समिधस्तथा।

इति मत्स्यपुराणदर्शनादस्तु वा वारुणस्य संख्या वैषम्यमिति चेन्न, एतावतापि तृतीयया बहुवचनेन च करणत्वं बहुत्वं च युगपदेव खलेकपोतन्यायेन मन्त्रस्य बोध्यते, न तु संख्या-वैषम्यमप्यश्रुतत्वात्। अत्राहुः—तडागे वरुणस्य प्रधानत्वादन्येषां चाप्रधानत्वात् संख्यावैषम्यस्य

सर्वतन्त्रसिद्धत्वादिति । यद्यपि तडागप्रकरणे ग्रहत्वेदिर्न श्रूयते महादानतडागयोश्च प्रकृतिविकृति-भावविरहात् , तथाप्यन्तरङ्गत्वादेकत्र निर्णीत इति न्यायात् सकलशिष्टाचाराच्च तडागे ग्रहवेदिरिति तत्त्वम् ।

यजुष्येव सकारादिपरतया अनुस्वारे विकारस्तेन ऋग्बहिर्भूतस्वाहादिपरत्वेऽपि विशेषो निष्प्रत्यूह एव बाधकाभावात् । अत एव प्रणवस्य बहिर्भूतस्य सहस्रशीर्षेत्यादिपरतयापि न विशेष इति सुव्यक्तमेवेति ।

शृणु राजन् महाबाहो तडागादिषु यो विधिः ।
एवमेव पुराणेषु तडागविधिरुच्यते ॥

इत्युपक्रमोपसंहारयोर्दर्शनात् ।

कूपवापीषु सर्वासु तथा पुष्करणीषु च ।
शतधन्वन्तरं चैव तावत् पुष्करणी मता ॥

'एतत्पञ्चगुणः प्रोक्तस्तडागः' इति श्रवणाच्च द्वयोः पर्यायत्वाभावादजहत्स्वार्थायां च बीजाभावात् सर्वत्र पुष्करणीपदेन त्यागवाक्यं चिन्त्यमिति ।

ततोऽवतीर्य गुरवे पूर्वमर्द्धं निवेदयेत् ।
ऋत्विग्भ्यः परमर्द्धं च दद्यादुदकपूर्वकम् ॥

इत्यत्र ऋत्विग्भ्य इति श्रवणात् समुदायस्यैवोद्देश्यता तस्य चाज्ञतया समुदायिनां स्वीकर्तृता । तथा चोद्देश्यस्वीकर्त्रोर्भेदाद् दानासिद्धिः, यथा चैत्राय दत्ते मैत्रेण संप्रतिपन्ने । अत आहुः 'परिषदि दत्तमदत्तम्' इति ।

ननु यथा ग्रहं सम्मार्ष्टीत्यत्र ग्रहत्वेनैकेन रूपेणोपस्थितायां सर्वस्यां व्यक्तौ प्रत्येकमेव सन्मार्गान्वयः, यथा वा गर्गा भोज्यन्तामित्यत्र गर्गत्वेनैकरूपेणोपस्थितायां सर्वस्यां गर्गव्यक्तौ प्रत्येकमेव भोजनान्वयः, तथा प्रकृतेऽपि ऋत्विक्त्वेनैकरूपेणोपस्थितानां त्रयोदशानां प्रत्येकमेव दानान्वयोऽस्तु । तथा च समुदायो हि न दानोद्देश्यः, किन्तु समुदायी, तथा चोद्देश्यस्वीकर्त्रोरभेदात् क्व दानासिद्धिरिति चेन्मैवम्, धर्मिणां चैत्रादीनामुद्देश्यत्वे ऋत्विग्भ्यइति द्वन्द्वश्रवणादितरेतरसमाहारद्वन्द्वविकल्पापत्तिः ।

अत एव यदग्नये चप्र जापतये च सायमग्निहोत्रं जुहोतीति श्रुतावपि प्रत्येकं देवतान्वये इतरेतरसमाहारविकल्पापत्त्याऽग्निप्रजापतिभ्यां स्वाहेति साहित्येनोभयानुगतेन रूपेणोभयोर्देवतात्वमितरेतरयोगस्योपगमात् । हन्तैवं प्रकृतेऽपि नेतरेतरसमाहारविकल्पावकाशः,तद्वदत्रापीतरेतरयोगस्यैव मयाभ्युपगमात् । ऋत्विग्भ्य इति प्रकृतौ श्रवणात्, समाहाराभ्युपगमे पाणिपादमितिवदेकवद्भावानन्तरं नपुंसकलिङ्गतापत्तिः, अत एव क्षौमे वसानावग्नीनादधीयातामित्यत्रापि वसानपदान्मिलितोपस्थितयोरेव यजमानदम्पत्योराधानान्वयो विधीयत इति । हन्तैवं सर्वत्रेतरेतरयोगे साहित्यस्य प्रधानतयोपस्थितौ तत्रैव होमान्वय आधानान्वयो वज्रलेपायितः स्यादिति ।

अत्रोच्यते—यथा आधाने दम्पत्योरन्वयः साहित्येन, तथार्त्विजामृत्विक्त्वेनैकेन रूपेण त्यज्यमानमहादानान्वयोऽप्यस्तु । न च साहित्यमेव द्वन्द्वार्थस्तेन तदेव देवतेति वाच्यम्, इतरेतरयोगे साहित्यमुपसर्जनम्, समाहारे तत्प्रधानम्, अत एव तयोर्भेदः, अन्यथोभयत्रापि साहित्यस्य प्रधानतयोपस्थितौ द्वयोर्भेदो न स्यादिति त्वत्सिद्धान्तात् । अन्यथा क्षौमे वसाना-

वग्नीनादधीयातामित्यत्रापि द्वन्द्वात् साहित्यस्य प्रधानतयोपस्थितौ तत्राप्याधानान्वयो न स्यात्, अचेतनस्य चैतन्यसाध्य आधाने योग्यताविरहात् । तस्माद् गलेपादिकयापि समाहार एव साहित्यं प्रधानमिति सर्वं सुस्थम् ।

हिरण्यगर्भे तूभयथाप्यतिशयरूपसंस्कारानुत्पत्तिः,तस्य जातत्वात् । अत एव यजमानशाखीयमन्त्रैरपि तत्करणे विद्याप्रयुक्तिरधिका स्यात्,अदृष्टोत्पत्तौ च तच्छाखीयमन्त्रस्यापि करणत्वमविरुद्धमेवेतिदिक् ।

यद्यपि विद्यावतामृत्विजां विद्याप्रयुक्तिर्न दोषः,तथापि—

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिभिः ।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥

इति कात्यायनोक्तं परक्रियया कर्माचरणमेव दोषः स्यात्, अत एव गोभिलीयपारस्करीययोः परस्परं परस्परशाखया वा न संस्कारकत्वमिति ।

हिरण्यगर्भे तु 'उपोषित इति श्रुतेः' एकभुक्तदिनेऽकृतोपवासो भवेदन्यथातिदेशादेव प्राप्तत्वेन व्यर्थतापत्तेरिति केचित्, तन्न; एवं हि ऋत्युङ्मनुपेत्यादिकमपि व्यर्थमधिकं वा स्यात्, तस्मात् कण्ठरवोक्तातिरिक्तपरमादिपदं गोवृषन्यायादेव, तथा चाधिवासनदिने आरब्धोपवासो भवेदित्यर्थः, आदिकर्मणि निष्ठानुशासनात् ।

गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ।
कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुंगवाः ॥
जातकर्मादिकाः कुर्यात् क्रियाः षोडश चापराः ।

यद्यपि "गुरुरुत्थापयेत् ततः" इति वचनाज्जातकर्मादिके गुरुरेवेदानीं कर्त्ता प्रतीयते, तथाप्युपक्रमे सकलकर्तृकत्वदर्शनादत्रापि सकलकर्तृकतैव, क्रियाकरणं तु पाठमात्रमेव तदानीं तत्करणासंभवात् । तास्तु क्रिया यजमानगृह्योक्ता एव, तासामेव तत्संस्कारकत्वेनोपस्थितत्वात् । अत एव "स्त्रीणां जातकर्म-नामकरण-निष्क्रमणान्नप्राशन-चूडाकरण-विवाहा इति षडेव । शूद्रस्य त्वेते षट्, पञ्चमहायज्ञा इत्येकादश । तथा च षोडशक्रियाविरहिणोः स्त्रीशूद्रयोरत्रानधिकारः" इति चण्डेश्वरादयः ।

वस्तुतस्तु सर्व एव संस्कारा ऋत्विग्भिः स्वमन्त्रेणैव करणीयाः, अन्यथा विद्याप्रयुक्तेरपि कल्पनापत्तेस्तत्रापि "अक्रिया च परोक्ता च तृतीया चायथाक्रिया" इत्यादि-कात्यायनविरोधो बीजम् । न च तेन विना कृता यजमाने संस्काराधायिकानुपदेशादिति वाच्यम्, न हि ता यजमाने संस्कारजनिकाः, पापध्वंसरूपे संस्कारे ध्वंसान्तरानुदयनियमात् । किमर्थं तर्हि तदा तत्करणम्? अदृष्टार्थम् । अत एव षोडशक्रियाविरहिणोरपि स्त्रीशूद्रयोरधिकारः, तत्कर्तृकाभिस्तद्गृह्योक्तषोडशक्रियाभिस्तत्राप्य - दृष्टोदयाविरोधादिति । न च "दिव्यदेहो भवाम्यहमित्यत्र पुंल्लिङ्गनिर्देशात् पुंमात्राधिकारः, स्वर्गकामो गां दद्यादितिवत् लिङ्गस्याविवक्षितत्वात्, किन्तु तद्वदेव स्त्रीपुंसाधिकारः । नापि प्रयोगलिङ्गोहः, स्वर्गकामत्वेन तुल्यवदधिकारे प्रकृतिविकृतिभावाभावेनोहाभावात् । न चासमवेतार्थता, दिव्यदेहो भवामीत्यादेः पार्थिवशरीरवति बाधितत्वेन प्रकृतमन्त्रस्यादृष्टार्थत्वेनासमवेतार्थकत्वात् ।

---

१. 'प्रयुक्तिरपि कल्पनीया स्यात्, अतः' इति ख० पु० ।

एवञ्च 'महापातकनाशनम्' इति स्मरणात्तन्नाशोऽपि फलम्, स च तावन्न विकल्पेन, अष्टदोषग्रासापत्तेर्जर्तिष्टिनयभङ्गापत्तेः किन्तु समुच्चयेन, लाघवात्, एककार्यस्यैकनियोज्याकांक्षायां सकलार्थवादोपस्थितफलकाम एव नियोज्यः स्वीक्रियते। न चैवमुत्पन्नमहापातकनाशस्य तद्ध्वंसरूपफलबाधात् कामनाविरहाद्वाऽनधिकारः स्यात्, न च तत्संशयेन तद्ध्वंसकामनासम्भवादधिकारोऽस्तु मङ्गलवदिति वाच्यं तत्रानुमितश्रुत्या तत्रैवाधिकारसिद्धेः, पापध्वंसार्थिप्रवृत्तौ निश्चितपापस्यैवाधिकारः प्रायश्चित्तवदिति वैषम्यादिति चेन्न, अत्राप्युक्तयुक्त्या समुच्चितफलत्वे सिद्धे नान्यथासिद्धानुवादकदर्शनसंदिग्धपापध्वंसस्यैवाधिकारो मङ्गलवत्।

अयं तु विशेषो यत् सति जन्मान्तरीयमहापातके तद्ध्वंसोऽपि जायते, असति तु नेति प्रतियोगिरूपसहकारिविरहान्निर्विघ्नकृतमङ्गलवदेवेति। "ब्रह्मलोके महीयते" इत्यभिधाय "कल्पकोटिशतं यावद् ब्रह्मलोके महीयते" इति श्रुतेरुभाभ्यां कल्पकोटिशतावच्छिन्नतल्लोकमहितत्वमेव फलम्। न चैवं पूर्वप्रतीकानर्थक्यम्, सोष्णीषा ऋत्विजः प्रचरन्तीत्यभिधाय रक्तोष्णीषा ऋत्विजः प्रचरन्तीतिवत् तदुपपत्तेः। तस्मात् प्राप्त एवोष्णीषलौहित्यरूपगुणविधिः, तथात्रापि प्राप्त एव ब्रह्मलोकमहितत्वेऽग्रिमखण्डकालरूपविधिरेव, अन्यथात्रेव तत्रापि विशिष्टविधानसंभवे उष्णीषद्वयविधिः स्यात्। तस्माद्विशिष्टविधिकल्पने गौरवात् तत्रेवात्रापि लाघवात् पश्चिमौ गुणविधी इति समम्।

ब्रह्माण्डे विंशतिपलादूर्ध्वमिति श्रुतेः सर्वत्रैव तत्र कर्षादिना वृद्धिरिति वदन्ति। तत्र च पलस्यैवोचितत्वात् तेनैव वृद्धिरत्र च 'स्वल्पे च देयः' इति विशेषश्रुतेर्द्रव्यापकर्षान्मोद्गश्चरुर्भवतीतिवत्। स्वल्पपदमत्र चतुर्थभागमात्रपरम्, तत्रैव प्रयोगप्राचुर्यात्। स्वशब्दोऽप्यतिशयवाची, तेनाल्पापेक्षयाल्पत्वं ब्रूते, तथा च सर्वत्र प्रथमकल्पोपस्थितस्य पलस्य षोडशभागपर्यन्तमेवैकाग्निकत्वम्, चतुरग्निकत्वमुभयत्राप्यविशिष्टमेवाविशेषात्।

यद्यप्येकाग्निकेऽपि वेदिदक्षिणे यजुर्वेदिकुण्डमायाति, 'यजुर्विदो दक्षिणतः' इति वचनात्, तथापि—

भुक्तौ मुक्तौ च पुष्टौ च जीर्णोद्धारे तथैव च।
सदाहोमे तथा शान्तावेकं वरुणदिग्गतम्॥

इति शिष्टपरिगृहीतवचनाद् वेदिपश्चिमे कुण्डम्। सर्वत्र चैकाग्निविधाने चतुरग्निके वा बह्वृचादेरपि गुरुत्वमविरुद्धमेवानिषेधात्, किन्त्वेकाग्निके तेनापि स्वशाखयैवानुष्ठेयम्, अन्यथा "अक्रिया च परोक्ता च तृतीया चायथाक्रिया" इत्यादि परिशिष्टविरोधापत्तेः।

एकाग्निके तु ब्रह्मवरणमग्न्युपसमाधानानुपदमेव होतृकर्तृकम्, 'दक्षिणतो ब्रह्मासनमास्तीर्य' इत्यनेन तदानीमेव कृताकृतावेक्षकत्वेन तद्वरणस्य होतृकर्तव्यत्वेन कात्यायनेन कथनात् चतुरग्निके तु 'अथर्त्विजः' इत्यादिना ऋत्विक्त्वेन यजमानकर्त्तव्यता विधानादिति।

कल्पपादपे स्वल्पेऽप्येकाग्निवदिति विशेषोपदेशादेकाग्निकत्वमपि। गोसहस्रे तु चतुरग्निकत्वमेव, "ऋत्विग्भ्यो धेनुमेकैकाम्" इति विशेषोपदेशस्य नियमार्थकत्वादिति. कामधेनुदानेऽपि 'एकाग्निवत्' इति विशेषोपदेशादेव, किन्तु वत्सोऽपि धेन्वर्धोपात्तहिरण्येनैव "धेनुं वत्सं च कारयेद् उत्तमां पलसहस्रैः" इत्युत्कर्षसीमाकरणेऽभिधानात्। वत्सोऽपि धेनु-

चतुर्थांशिनैव "चतुर्थांशिन वत्सः स्यात्" इति गुडधेनुप्रकरणे दृष्टत्वात्। स्वेच्छयैव वत्सद्रव्यनियमनमिति पुनः सागरमतमनादेयम्, अप्रामाणिकत्वात्।

गुडधेनुदाने तु नैवम्—

"उत्तमा गुडधेनुः स्यात् सदाभारचतुष्टयम्।
वत्सं भारेण कुर्वीत..........॥"

इत्यनेन पृथग् द्रव्यकथनात्। अत एव गुडधेनुवदेव पृथग् द्रव्येणैवात्रापि वत्सकरणमिति भ्रमो हेयः। सर्वकामफलमिति महादानचतुष्टये श्रुतानां फलानामन्यतममहादानफलकामनैवाधिकारिविशेषणम्, नापि समुच्चितम्, नाप्यन्यदैच्छिकं फलम्, सिद्धियोगन्यायात्। तथा हि "एकैकस्मै फलायान्ये ऋतवो य आह्वयन्ते सर्वेभ्यो दर्शपौर्णमासौ" इत्यत्र सर्वपदस्य प्रस्तुतवाचितया एकैकस्यैव यज्ञफलस्य प्रस्तुतत्वेनोपस्थितत्वात्, समुच्चितस्यानुपस्थितत्वात्, अन्यथा यागान्तरे प्रवृत्तिरेव न स्यात्। भूमादेरभावाद् वैजात्यमात्रस्याप्रवर्त्तकत्वात्। अत एव नाप्यन्यदैच्छिकम्, उपस्थापकाभावात्, अन्यथा "हिरण्यं सर्वकामदम्" इत्यत्रापि "प्रारिप्सितविघ्नध्वंसस्य फलत्वेन मङ्गलं विना" इत्यादिविरोधापत्तेः। अत एव दानान्तरे श्रुतफलेष्वेवान्यतमफलकामना तत्राप्यधिकारिविशेषणमिति रहस्यम्।

विकृतौ चात्र 'गुडधेनुमन्त्रैः' इत्यनेन बहुत्वं श्रूयते, तथापि 'इत्यामन्त्र्य ततो दद्यात्' इति श्रुतौ प्रकृतेरेकत्वमेव, तेनैकमन्त्रतापन्नेन श्लोकपञ्चकेनेत्यर्थः। मन्त्रसंबन्धस्य विधेयतया संख्यायामतात्पर्यात्। अत्र च विप्रायेति श्रुतेः संप्रदानैकत्वमेकाग्निपक्ष एवेति भ्रमो हेयः, नित्यवच्छ्रुतत्वात् 'नैकां बहुभ्यः' इति श्रुतेश्च। न च ब्राह्मणमात्रविधिरयम्, अतिदेशादेव तस्य प्राप्तत्वात्। तस्मादेकस्यानेकस्य वा विकल्पेनार्त्विज्ये तथाभूतस्यैव विकल्पेन संप्रदानत्वे प्राप्ते एकस्यैव संप्रदानत्वं नियम्यते, तेन चातुश्चरण्येऽप्येक एव संप्रदानमिति सिद्ध्यति। यथा विकृतियागेऽतिदेशागतव्रीहियवयोः प्राप्तौ वैकृतविशेषे व्रीहिश्रुतौ पाक्षिकस्यापि यवस्य बाधस्तथेहापीति।

हिरण्याश्वे तु 'स्वल्पे चैकाग्निवत्' इति श्रुतेरेकाग्निकत्वमपि। एवं च ब्रह्माण्ड-कल्पपादप-कामधेनु-हिरण्याश्वानामेकाग्निकत्वमिति तत्त्वम्।

हिरण्याश्वरथे त्वनुक्ताग्निके 'शुक्लमाल्याम्बरधरो दद्यात्' इति श्रुतेः प्रकृतिवद्विकृतिरिति न्यायेन चतुरग्निकत्वमेव। स्वल्पद्रव्यकत्वेन ब्रह्माण्डवदत्राप्येकाग्निकत्वमिति बहवः, तन्न, प्रकृतधर्ममपहाय विकृत्यन्तरधर्मग्रहे हेत्वभावात्, कल्पपादपादौ विशेषोपदेशानर्थक्यापत्तेश्च। ननु ब्रह्माण्डोक्तमेकाग्निकत्वमत्रान्वीयतामिति न ब्रूमः, किन्तु स्वल्पवित्तकत्वे यदेकाग्निकत्वं ब्रह्माण्ड उक्तं तेन विद्मो यत्संभवल्लघुगुरुकल्पानां महादानानां धनाल्पत्वेऽपि दानाधिकारोऽस्ति, किन्त्वेकाग्निविधिना। तद्वीजं तु ब्रह्माण्डवदत्रापि समानमेव, तेन तद्वदत्रापि समानमेव स्वल्पधनस्य युक्तमेकाग्निकत्वम्। न चैवमुक्तन्यायादेव कल्पपादपादीनां त्रयाणामेकाग्निकत्वे विशेषोपदेशो व्यर्थः स्यादिति वाच्यम्, प्रतिपत्तिलाघवाय कृतस्योपदेशस्यापर्यनुयोज्यत्वादभिप्रायस्त्रातन्त्र्यादुपायस्योपायान्तरादूषकत्वाच्च।

अत एव बीजसाम्याद् गोभिलोक्तगायत्रीजपस्य शुष्कवासरकाधिकारिकत्वं जलसन्ध्यावन्दनपक्षे वाजसनेयिनामप्यन्वेति। तथा द्रव्याल्पत्वे गजरथ-पृथिवी-कल्पलता-पञ्चलाङ्गल-

विश्वचक्र-सप्तसागर-हिरण्याश्वरथमहाभूतघटानामेकाग्निकत्वमपीति चेन्न, विकृतौ विशेषोपदेशेनैव प्राकृतधर्मबाधः, न त्वन्यथा, बीजसाम्यस्याप्रयोजकत्वात् ।

गजरथे त्वस्नानपदेन रूढ्या वाणपुष्पमेवोच्यते, रथकार आदधीतेत्यत्र जातिविशेषवत्, न तु योगेन स्नानेतरवत्, योगार्थस्य चरमोपस्थितत्वात् । क्वचिच्चरमोपस्थितस्यापि प्रकरणादि-साहित्येन योगार्थस्यान्वयप्रतियोगित्वमेव, अनन्यगतिकत्वात् । अत्र च ब्राह्मणेभ्य इति विशेषो-पदेशेन तदेव नियम्यते, सिद्धे सत्यारम्भस्य नियमार्थत्वात् । यथा प्रकृतौ यवप्राप्तौ तद्धर्माति-देशाद् विकृतावपि तल्लाभसंभवे तत्र पुनर्यवोपदेशेन यवनियमो व्रीह्युपदेशेन व्रीहिनियम इति सिद्धान्तः । अन्यथोपदेशानर्थक्यापत्तेः । न च प्रकृतयागे विकल्पेनोभयत्र प्राप्तौ विकृतौ विशेषोपदेशस्य भवतु प्रकृतिप्राप्तकल्पान्तरबाधकत्वमत्र तु न तथा, प्रकृतावेकाग्न्यप्राप्तेः । न हि प्रकृत्यतिदेशप्राप्तमेव निषिध्यत इति ब्रूमः, किन्तु लाघवात् प्राप्तमात्रम् । प्राप्तिश्च प्रकृतियागे विकृतिधर्मातिदेशात् । अत्र च स्वल्पधनकत्वं न ब्रह्माण्डवत् , तस्माद् गजरथपञ्चलाङ्ग-लपृथिवीकल्पलतानां चतसृणामप्युक्तचतुरग्निकानां वज्रलेपायितं चतुरग्निकत्वमिति ।

हन्त ! तथाप्यनुक्ताग्निके द्रव्यापकर्षेऽग्न्यपकर्षोऽस्तु नियमाभावात् ? न, प्रकृतधर्मत्यागे बीजाभावात् ।

पञ्चलाङ्गलकेमित्यत्र बहुव्रीहिरेव—

भूमिदानं नरो दद्यात् पञ्चलाङ्गलकान्वितम् ।

इति स्मरणात् । न च 'गोभूमिलाङ्गलधुरन्धरसंप्रदानात्' इति स्मरणात्तुल्यवदन्वयोऽस्तु, तत्रापि भूमेर्दानं विधेयमित्युपसंहारात्, भूमेरेव प्राधान्यप्रतीतेः ।

'अथ सर्वं निवेदयेत्' अत्र सपत्नीकस्य गुरोः सन्निहितत्वात् स एव संप्रदानमन्ये वरणा-दिभाज इति । अत्र च 'गुरुर्यस्मै निवेदयेत्' इत्यनेन तिलादिहोमे नानाहोतृकत्वेन चातुश्चरणे शब्दसिद्धेऽत्रापि चतुरग्निकत्वनियम एव प्राप्तत्वेन पुनरुपदेशस्य नियमार्थत्वात्, अन्यथा वैयर्थ्यापत्तेः । अत एव निरग्निकत्वमिति तत्त्वम् ।

अत्रैव "पर्जन्यादित्यरुद्रेभ्यः पायसं निर्वपेच्चरुम्" इति स्मरणान्मिलितदेवतात्वम् "ऐन्द्र-वायव्यं ग्रहं गृह्णाति" इतिवदिति केचित्, तन्न द्वन्द्वान्तरमनुशिष्टेनाण्प्रत्ययेन दृष्टान्ते मिलिते देवतान्वयो बोध्यत इति, तत्र मिलितदेवताभिधायकोऽण्प्रत्यय एवास्ति प्रकृते तु मिलितदेवता-भिधायकाभावात् । न च 'पर्जन्यादित्यरुद्रेभ्यः' इति बहुवचनश्रवणात् सहितानामेव होमान्वयोऽ-स्त्विति वाच्यम्, 'ग्रहेभ्यो लोकपालेभ्यो जुहुयात्' इत्यत्रापि तथात्वापत्तेः । तस्माद् यत्र मिलितदेवतात्वे प्रमाणं तत्रैव मिलितहोमान्वयः, अत्र तु गर्गा भोज्यन्तामितिवदभिधानक्रियायामेव साहित्यान्वयः, क्रियायास्तु प्रत्येकमेवेति ।

धेनुदाने त्वेवमुच्चार्यताम् 'धेनुं ब्राह्मणेभ्यो निवेदयेत्' इति विशेषोपदेशाच्चतुरग्निकत्व-लाभो द्रव्यापकर्षेऽग्न्यपकर्ष इति भ्रमो हेय इति ।

"इत्यामन्त्र्य ततो दद्याद् विश्वचक्रम्" इत्यत्रापि प्रकृतिवदिति न्यायेन चतुरग्निकत्वमेव । द्रव्यापकर्षेणाग्न्यपकर्षः परास्त एव ।

विश्वचक्रदाने द्वितीयावरणपूर्वादिप्रदक्षिणक्रमकनेम्यन्तरालस्थजलशाय्यत्रिभृगुवशिष्ठब्रह्मक-श्यपमत्स्यकूर्मवराहनरसिंहवामनरामरामरामबुद्धकल्कीत्यादिकं दानवाक्यम् । तत्र नवीना एकशेष-मिच्छन्ति, तन्न; द्वितीयावरणे 'तत्पूर्वतो जलशायिनम्' इत्युपक्रम्य 'रामो रामश्चरामश्च बुद्धः

कल्कीति' च क्रमादित्यनेन प्रतिकोष्ठकं न्यासविशेषनिर्देशयोरावश्यकत्वेन तदभावात्। अत एव तृतीयावरणे 'गौरीमातृभिर्वसुभिर्वृत्ते'त्यत्र वसवः प्रत्यूषादित्वेन मातरो ब्राह्म्यादित्वेन न्यस्यन्ते निर्दिश्यन्ते च, तेषां गणदेवतात्वं सन्निहितप्रोषितत्वात्।

कल्पलतादाने तु—

मध्यमे द्वे तु गुरवे ऋत्विग्भ्योऽन्यस्तथैव च।

इति विशेषोपदेशाच्चतुरग्निकत्वनियमो नैवारं चरुर्भवतीतिवदेव। अत एव प्राकृतो विभागः परास्तोऽन्यपकर्षोऽपि निरस्त इति। 'इति ददाति रसामरसंयुताम्' इति सप्तसागरे चतुरग्निकत्वमेव, प्रकृतिवदिति न्यायाद् विशेषोपदेशविरहाच्च। वित्ताल्पत्वे त्वेकाग्निकत्वमिति वदन्ति। तत्र चोक्तमेव वैकृतविशेषोपदेशमन्तरेण प्राकृतधर्मस्य त्यागायोगात्। बीजसाम्यस्याप्रयोजकत्वादिति। 'ऋत्विग्भ्यो दक्षिणां दद्यात्' इति विशेषोपदेशादेव रत्नधेनुदाने 'चतुरग्निकत्वमेव' इत्युच्चार्य 'महाभूतकघटं यो विनिवेदयेत्' इत्यत्र विशेषोपदेशविरहाद् बीजसाम्याच्च वित्ताल्पत्वे त्वेकाग्निकत्वमपि वदन्ति। तत्रोक्तमेव, अत्र च—

षोडशैतानि यः कुर्यान्महादानानि मानवः।
न तस्य पुनरावृत्तिरिह लोके विजायते॥

इत्यत्र षोडशपदप्रयोगस्यानेकसाध्यत्वेन नैकप्रयोगविषयत्वम्, अतोऽपुनरावृत्तेर्मिलितषोडशमहादानसाध्यत्वाभावेनास्य स्तावकत्वमित्यवसेयमिति दिक्।

मत्स्यपुराणे—

कृष्णाजिनप्रदानस्य विधिं कालं ममानघ।
ब्राह्मणं च समाचक्ष्व तत्र मे संशयो महान्॥
वैशाखी पौर्णमासी च ग्रहणं चन्द्रसूर्ययोः।
पौर्णमासी च या माघे आषाढी कार्त्तिकी तथा॥
उत्तरायणे च द्वादश्यां तत् स्याद् दत्तं महाफलम्।

अत्र च प्रकृतदानं द्वादश्यङ्गकमेवं 'तत् स्याद् दत्तं महाफलम्' इति उपसंहारादिति भ्रान्ताः, तन्मन्दम्। "अथ चैत्र्यां वृषोत्सर्गः कार्त्तिक्यां वा प्रयत्नतः" इतिवदत्रापि विशेषप्रतीतेः। न च—

दिवसस्याष्टमे भागे यदा मन्दायते रविः।
कालः स कुतुपो नाम तत्र दत्तमथाक्षयम्॥

इतिवत् प्रकृतेऽपि गुणपरतैव। तत्र हि—

पूर्वाह्णे मातृकं श्राद्धं अपराह्णे तु पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥

इति वचनादन्यतः प्राप्तत्वेन गुणविधिरेव, यथा "चमसेनापः प्रणयीत गोदोहेने न पशुकामस्य" इत्यत्र, यथा वा "सोष्णीषा ऋत्विजः प्रचरन्ति लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यत्र, यथा वा—

गृहेषु प्राकृती सन्ध्या गोष्ठेषु दशगुणा स्मृता।
नदीषु शतसाहस्री अनन्ता शिवसन्निधौ॥

इत्यत्र सर्वत्र कालस्योष्णीषसंबन्धस्य देशस्य वान्यतः प्राप्तत्वात्।

ननु महाफलमिति श्रुतेरत्रापि कालान्तरविधिरस्तु ? वाक्यार्थत्वेन पदार्थत्वेन वा तदभावात्, तात्पर्यगौरवापत्तेश्च । अत एव गयायां द्वादशदैवतश्राद्धस्याप्राप्तत्वेनागत्या विशिष्टविधिः । एवं च सामान्यतो दशमुहूर्तान् विधायापरपक्षस्यापराह्णः श्रेयानिति कालविधौ, तथा सामान्यतः श्राद्धं विधाय 'श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती' इति देशरूपगुणविधावुदाहरणं कर्ममीमांसकानामिति स्तुतिरेवेति दिक् ।

सर्वत्र दाने महादाने वा प्राग्ग्रीवमुदक्पादमधःस्थितरोमकमेव सश्रृङ्गं सखुरं कृष्णाजिनमास्तरणीयम् "ततः सश्रृङ्गसखुरमास्तरेत् कृष्णमार्गकम्" इति मत्स्यपुराणात्, "चर्माप्युत्तररोमाणि प्राग्ग्रीवाणि" इति कात्यायनवचनाच्चेति ।

भूमिदानप्रयोगे प्रियदत्तेति विशेषणीयम्, तथैव सर्वत्र प्रयोगात् । तत्र यद्यप्यापाततो न प्रमाणं दृष्टमस्ति, तथापि तदन्वेषणीयमिति दिक् ।

"जप्यानि सूक्तानि तथैव तेषामनुक्रमेणैव यथानुरूपम्" इत्यत्र सूक्तं मन्त्रस्तत्संघो वा, तेन पूजितदेवतानां यथासंभवं मन्त्रो मन्त्रसंघो वा जपनीय इत्यर्थः । यत्तु सूक्तं मन्त्रसंघ एव, तेन यस्या एव देवतायाः सूक्तमस्ति तस्या एव सूक्तजपः, न तु सर्वस्या इति सागरः, तन्न; अनुवाकादिपदवत् सूक्तपदस्य मन्त्रसंघे शक्तत्वाभावाद् व्यवहारविरोधात् । अत एव—

ब्रह्माच्युते शार्कवनस्पतीनां सुमन्त्रतो होमचतुष्टयं स्यात् ।

इत्यत्राच्युतहोमे सहस्रशीर्षेत्यादिसूक्तजपो वज्रलेपायित एवेत्यस्मत्पितामहचरणाः । यद्यपि मत्स्यपुराणे 'गङ्गाद्याः' इति श्लोकार्द्धं मन्त्रभिन्नत्वेन न्यसनीयप्रकरणे श्रूयते, तेन तस्य न करणत्वम्, किन्तु 'सर्वे समुद्राः' इत्यादेरेव, तथापि वृद्धा अविशेषेण लिखन्तीति ।

कुण्ड उमामहेश्वरसंवादे—

हस्तमात्रमधः खातं चतुरस्रैकहस्तकम् ।
वेदिपश्चिमतः कुण्डं कुर्याद् दद्याच्च मेखलाम् ॥
पुःकरिण्यां परीक्षासु त्रिमेखलमुदाहृतम् ।
मेखला प्रथमा कार्या द्व्यंगुलोच्छ्रायविस्तरा ॥
हुताशनांगुला कार्या द्वितीया कुण्डवेदिभिः ।
चतुरंगुलं ततः कुर्यात् तृतीयामुन्नतामथ ॥
उच्छ्रायसमविस्ताराः सर्वाः कार्याश्च मेखलाः ।

मत्स्यपुराणे—

वेद्याश्च परितो गर्तारत्निमात्रास्त्रिमेखलाः ।

पाञ्चरात्रे—

एता हस्तमिते कुण्डे वेदाग्निनयनांगुलाः ।

पञ्चरात्रशैवागमयोः—

तद्बहिर्मेखलास्तिस्रो वेदवह्नियमांगुलैः ।

कालोत्तरे—

मेखलात्रितयं कार्यं कोणरामयमाङ्गुलैः ।

वशिष्ठोक्तग्रहयज्ञे—

चतुस्त्रिद्व्यङ्गुला वापि तिस्रः सर्वत्र शोभनाः ।

लक्षणसंग्रहे—

प्रथमा द्व्यङ्गुला व्यासादुन्नता मानवाङ्गुलैः ।
मध्यात्तु त्र्यङ्गुला बाह्ये तृतीया तु यमाङ्गुला ॥

तेन सर्वदिक्षु खाताद् बहिरेकाङ्गुलम्, कण्ठं त्यक्त्वा कण्ठसन्निहिता प्रकृतभूमितो नवाङ्गुलोन्नता बहिर्द्वितीया मेखला, चतुरङ्गुलोन्नता प्रथमा मेखला कार्या । "आद्या वेदीश-[विस्तारा उन्नता सा नवाङ्गुलैः" इति विश्वकर्मवचनात् ।

एका नवाङ्गुलोच्छ्राया द्वितीया पञ्चकोच्छ्रता ।
तृतीया द्व्यङ्गुलोच्छ्राया कीर्तितोऽयं समुच्छ्रयः ॥

इति लिङ्गपुराणात् । "या या तु मेखला पूर्वा सा भूमिः परिकीर्त्तिता" इति श्रवणाच्च । द्वितीया तु बहिस्तत्संल्लग्ना प्रकृतभूमितः पञ्चाङ्गुलोच्छ्राया तृतीया मेखलातस्त्र्यंगुलोच्छ्रिता द्व्यङ्गुलविस्तारा मेखला कार्या । लिखितहेतोस्तत्संल्लग्ना प्रकृतभूमितो द्व्यङ्गुलोच्छ्रिता द्व्यङ्गुलविस्तारा तृतीया मेखला कार्येति परमगुरव. । अत एव 'क्रमेण द्वित्रिचतुरङ्गुलोच्छ्राय-मेखलात्रययुतं कुण्डं कार्यम् इति धर्मकरलिखनम् । तथा 'चतुस्त्रिपक्षाङ्गुलोच्छ्रायचतुस्त्रिद्व्यङ्गुल विस्तृतमेखलात्रययुतानि कुण्डानि' इति रूपनारायणलिखनमपि संगच्छते । ये तु प्रकृत-भूम्यवधिकमेव चतुरङ्गुलत्वं त्र्यङ्गुलत्वं द्व्यङ्गुलत्वं मेखलानाम्, तेन खातसन्निहितप्रकृतभूमित-श्चतुरङ्गुला, तद्बहिः प्रकृतभूमितस्त्र्यङ्गुला, तद्बहिः प्रकृतभूमितो द्व्यङ्गुला कार्येत्याहुस्ते भ्रान्ताः, विश्वकर्मादिवचनविरोधादिति ।

एताश्च मेखलाः खाताद् बहिरेकाङ्गुलं कण्ठं त्यक्त्वा कार्याः "खातादेकाङ्गुलं त्यक्त्वा मेखलानां विधिर्भवेत्" इति पिंगलानां मतसंवादात् ।

महादाने तु खाताद् बहिरेकाङ्गुलं त्यक्त्वा द्व्यङ्गुलोच्छ्रिता तावद्विस्तारा एकैव मेखला कार्या 'मेखलैकाथवा तिस्रो भूतसंख्याथवा प्रिये' इति वचनात् । सुमेखलायोनीत्युत्पत्तौ विशेषश्रुतेः, योनिस्तु सर्वत्र तुल्यैव, 'एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते' इति वचनादिति ।

वास्तुलेखने च 'दशपूर्वायिता रेखा दश चैवोत्तरायता' इति वचनाद् वास्तुमण्डलवायव्य उपविश्य पूर्वाभिमुखो गुरुरुत्तरस्यामारभ्य दशरेखाः प्राङ्मुखीर्यथा दक्षिणं कुर्यात् । एवं नैर्ऋत्यामुपक्रम्योपविश्य पश्चिमादुत्तरायताः पूर्वापररेखा उत्तरोत्तरं कनकशलाकया कार्याः, 'प्रदक्षिणं तु कर्तव्यं वास्तोः पदविलेखनम्' इत्यसंकुचितश्रवणादिति परमगुरवः ।

भ्रान्तास्तु दशप्रागायता दक्षिणोपक्रमा उदगपवर्गा रेखाः कृत्वा दशदक्षिणोत्तरायताः पश्चिमोपक्रमाः पूर्वापवर्गा रेखाः कुर्यात् 'प्राञ्च्युदञ्चिकर्माणि सन्तिष्ठेरन्' इति कात्यायन-वचनादुदकसंस्थमेव रेखाकरणमिच्छन्ति । अत एव 'मणिके त्रीणि पर्यन्याददम्यः पृथिव्यै इत्यत्र बलित्रयं प्राक्संस्थमुदक्संस्थं वेति कामत एव शिष्टा आचरन्ति लिखन्ति च । अत एव च' जयमाधवनाम्नि ग्रन्थ एवमेव लिखितमिति, तन्न, सूत्रस्योत्सर्गपरत्वात्, वचनस्य विशेषपरत्वेन प्रकृतपरत्वादिति ।

यद्यपि 'तथेन्द्रायेश्वराय च' इति मत्स्यपुराणे श्रूयते, तथापि शिवपदेन न होमो मन्त्राभिधानबलादिति ।

कृष्णाष्टमीव्रते तु यद्यप्युभयवेधेऽष्टमीनवमीमिश्रैवोपादेया 'षण्मुन्योर्वसुरन्ध्रयोः'

षष्ठ्यष्टमी अमावास्या शुक्ला चैव चतुर्दशी ।
एताः परयुताः कार्याः पराः पूर्वेण संयुताः ॥

इति वचनात्, 'अरुणोदयवेलायां नवम्यां च ततस्त्रिय' इति वाक्यशेषाच्च । तथापि 'तस्मात् तत्रैव संपूज्य' इति विधिवलात् पूजैव प्रधानमुपवासोऽङ्गम्, अतः परदिने पूजायोग्य-काललाभे सति युग्मविध्यादरः, न तु तदयोग्ये । अत एवोभयत्र विहितकाललाभे सति युग्मविध्यादर इति सिद्धवल्लिखितमिति ।

एकादशीव्रते तु यत्र दशमीविद्धैकादशी दिनान्तरे न वर्द्धते तत्र दशमीविद्धैवोपोष्या,

पक्षहानौ स्थिते सोमे लङ्घयेद् दशमीयुताम् ।
वृद्धौ परा तु कर्त्तव्या क्षये पूर्वां तु कारयेत् ॥

इत्यादिमहाजनपरिगृहीतवाक्यात् । दशमीविद्धैकादशीनिन्दाप्रतिपादकवचनानि तु परत्रैकादशीसंभवविषयाणीति, उभयवेधे तु द्वादशीमिश्रैवोपोष्या ।

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
अमावास्यात्रयोदश्यावुपोष्याः स्युः परान्विताः ॥

इति वचनात् । यत्र तु पूर्वदिने षष्टिदण्डावच्छिन्नैवाग्रिमदिने द्वादशी हानियुक्ता द्वादशीसाम्ययुक्ता वा वर्द्धते, तत्रोभयत्राग्रिमदिन एवोपासनीया 'उपोष्याः स्युः परान्विताः' इति लिखितवचनात् । न च तस्य प्रकरणाद्वैधविषयत्वेनाखण्डतिथ्यविषयत्वमिति वाच्यम्, संकोचापत्तेः । किन्त्वैकादशीमुपवसेदित्यत्रान्तिमभागयुक्तैकादश्यहोरात्रमुपवसेदित्यस्यावश्य-वक्तव्यत्वात्, पूज्ये विधिप्रवृत्तेः । अत एव यत्र दशमीवेधो नास्ति, अग्रिमदिने चैकादशी वर्द्धते तत्रापि वर्द्धमानैकादश्युपोषणं शास्त्रार्थ इति कृत्यमहार्णवे परमगुरवः । न च—

"द्वादश्यां पारणाऽलाभे पूर्वामुपवसेद् गृही ।
सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ॥"
"तत्रोत्तरां यतिः कुर्यात् पूर्वामुपवसेद् गृही ।"

इति वाक्यद्वयात्तस्य द्वादश्याधिक्यविषयकत्वमेव, एतयोरनाकरत्वात् । अत एव निर्णये लिखनमप्येतत्परतयैव नेयमेकवाक्यतानुरोधात् ।

"तत्रोत्तरां यतिः कुर्यात्पूर्वामुपवसेद् गृही" इति वाक्यद्वयात् तस्य द्वादश्याधिक्यविषय-कत्वमेव, एतयोरनाकरत्वात् । अत एव निर्णये लिखनमप्येतत्परतयैव नेयमेकवाक्यतानुरोधात् ।

गौडास्तु द्वादशीक्षये लिखितवाक्यद्वयाद् व्यवस्थामिच्छन्तः पूर्वमेवोपवसन्ति, किं च यत्र पूर्वदिने दशमीविद्धाऽग्रिमदिने द्वादशीयुतैव तृतीयदिने द्वादशी न वर्द्धते तत्र दशमीवेधे निन्दां पश्यन्तो द्वादशीमेवोपवसन्ति, प्रधानकालानुरोधात् । पारणादावङ्गे द्वादशीबाध एव, पठन्ति च—

एकादशी द्वादशीयुक्ता परतो न च वर्द्धते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

इति तत्र चोक्तमेव। यत्तु द्वादशीक्षये तद्वृद्धौ वा सर्वत्र षष्टिदण्डात्मिकैवोपवसनीया। "पूर्णाऽप्येकादशी त्याज्या परतो यदि वर्द्धते" इति वाक्ये पूर्णापीत्यस्य पूर्णकल्पापीत्यर्थं इति, अन्यथा 'अपि'शब्दानर्थक्यापत्तेः। तेन पूर्णा ग्राह्यैवेति वाक्यार्थः। तथा च शब्दादेव तिथेरुदयास्तमनविशुद्धत्वात् कपालाधिकरणन्यायाच्चेति परेषां मतम्। तत्सर्वंथैवायुक्तमप्रयोजकत्वात्। पूर्णापीत्यस्य विषं भुंक्ष्वेतिवदर्थाच्चेति।

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
त्रयोदशी उषःकाले उपोष्या तत्र का भवेत्॥

"उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः" इत्यनेन द्वादशीसाम्ययोगे शुद्धाधिकपक्षद्वये सर्वेषामुपवासविधानम्। तच्च—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
उत्तरां तु यतिः कुर्यात् पूर्वामुपवसेद् गृही॥

तथा 'नवम्यां स्यात् परेऽहनी' त्येकवाक्यतया श्रद्धाकृतविषयमेवेदमिति द्रष्टव्यम्। अथवा गृहस्थसंन्यासिनोरुभयत्रापि विधानसामर्थ्यात् 'उपोष्ये द्वे तिथी' इत्यत्र नानुपपत्तिः।

एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि।
भुञ्जन् गोमांसभक्ष्यस्य पापमाप्नोति मानवः॥
शुक्ला वा यदि वा कृष्णा समुपोष्य सुखी भवेत्।
भुञ्जन् सुरापानसमं पापमाप्नोति मानवः॥

इत्यत्रैकादश्यां न भुञ्जीतेति श्रवणात्, तथैकादशीमुपवसेदिति श्रवणाच्चैकादश्यामुपवासो विधीयते, स चाहोरात्रव्यापी भोजनाभावो दोषाभावविशिष्टः।

उपावृत्तस्य दोषेभ्यो यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयः सर्वदोषविवर्जितः॥

इत्यनेन परिभाषितः। स चाकरणे निन्दाश्रवणात् करणे फलश्रवणाच्च संवलिताधिकारिकः। तत्र च—

संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे।
चन्द्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृही॥
इन्दुक्षयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे।
उपवासं न कुर्वीत यदिच्छेत् सन्तति ध्रुवाम्॥
संक्रान्त्यामुपवासेन पारणेन युधिष्ठिर!
एकादश्यां तु कृष्णायां ज्येष्ठः पुत्रो विनश्यति॥
शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत्।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन॥

इत्यादिश्रवणात् पुत्रवतां गृहस्थानां कृष्णैकादश्यामुपवासो निषिध्यते। तथा 'शयनीबोधिनी'त्यादिभविष्योत्तरवचनेन मार्गादिकृष्णपक्षीयानामष्टानामेकादशीनां गृहस्थमात्रं प्रति निषेधे सिद्धे हरिशयनालिङ्गितानामपि चतसृणां कृष्णानां पुत्रवत्सु गृहस्थेषु निषेध आयाते—

शुक्ला नित्या समाख्याता कृष्णा नैमित्तिकी स्मृता ।

इति विष्णुवचनेन गृहस्थानामपुत्राणां तत्फलकामनोदये चतसृषु हरिशयनालिङ्गितासु कृष्णास्वधिकारः । 'संक्रान्त्यामुपवासं च' इत्यादिवचनपर्यालोचनया च कृष्णैकादश्यां संक्रान्तौ चन्द्रसूर्यग्रहेऽमावास्यायां वा कामनोदये चाधिकार एवेति निर्गलितम् । अत एव—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लमेव सदा गृही ॥

इति विष्णुधर्मवाक्याच्छुक्लैव गृहस्थानां नित्या तत्रैव च "यानि कानि च पापानि" इत्यादयो बहवो निन्दार्थवादा इति ।

मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
पयोमूलफलाहारी हृदि शल्यं ममार्पति ॥

इति भगवद्वाक्ये विशेषनिन्दाश्रवणादन्यासु फलमूलदुग्धाशनमविरुद्धमेवेति प्राच्याः । तन्मन्दम्, बाधसापेक्षतापत्तेः, तात्पर्यगौरवान्निषेधस्यात्यन्तपरत्वेनाप्युपपत्तेरिति ।

एकादश्यां निराहारो यो भुंक्ते द्वादशीदिने ।
शुक्ला वा यदि वा कृष्णा तद्व्रतं वैष्णवं महत् ॥

इति वराहपुराणात् पारणे द्वादशीनियम एव ।

पारणं तु त्रयोदश्यां यः करोति नराधमः ।
द्वादशं द्वादशी हन्ति नात्र कार्या विचारणा ॥

इति भविष्ये सामान्यनिषेधोऽपीति गौडाः, तन्मन्दम्; महदिति वाक्यशेषात् ।
अत एव—

यदा भवेदतीवाल्पा द्वादशी पारणादिने ।
प्रातरेव तदा कुर्यात् कर्म मध्याह्निकं त्वपि ॥
सङ्कटे विषमे प्राप्ते पारणं तु भवेत् कथम् ।
अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत् ॥
कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणे ॥

इत्यादीनि तत्पराण्येवापेक्षितविधेरिति । यन्मतेऽपि श्राद्धे शेषान्नप्रतिपत्तिरङ्गं तन्मतेऽप्येकादश्यादौ तदाहारं विनैव तत्सिद्धिरनन्यगतिकत्वात्, ईज्यायामावाहनवदिति साम्प्रदायिकाः । वस्तुतस्तु तदा शेषान्नस्य घ्राणमात्रम्—

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

इति वराहपुराणात्, 'तन्नैव प्राशितं नैवाप्राशितं भवति' इति कालादर्शलिखितश्रुतेश्चेति ।
केचित्तु रविवारे पारणमुपोषणं वा संक्रान्तौ च गृहिणां नेच्छन्ति—

संक्रान्तौ रविवारे च ग्रहणे चन्द्रसूर्ययोः ।
पारणं चोपवासं च न कुर्यात् पुत्रवान् गृही ॥

इति राजमार्तण्डलिखितवाक्यात् । ते हि भ्रान्ताः, तथा हि राजमार्तण्ड एव तदुत्तरम्—

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषंगकृतो दोषो यतो नित्यमुपोषणम् ॥

इति वचनदर्शनादिति । द्वादशीव्रते तु द्वादश्यां विष्णुपूजनमेव प्रधानमुपवासोऽङ्गमिति द्वादश्यवृद्धौ दशमीविद्धैवादर्तुमुचितेति युक्तमेवेति ।

संस्कारश्च पुत्रस्य प्रथम विवाह एव, आद्यादेव संस्कारोदयसंभवे द्वितीयादेर्व्यर्थत्वात् । किञ्च द्वितीयादयो न संस्कारक्षमाः, सजातीयव्यापारावरुद्धैः सजातीयव्यापारान्तरानुदयनियमात् । यद्यपि व्याप्यवृत्तिजातीय एवायं नियमः, अत एव कर्मवति कर्मानुत्पादः, तथापि—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिभिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैदिकं गार्भिणं चैनो द्विजानामपमृज्यते ॥

इत्यादिमनुवचनेन प्रथमविवाहान्तेनैव तस्य जातत्वाद्, द्वितीयस्य तदुत्पादकत्वे मानाभाव इत्यत्रैव तात्पर्यात् । अत एव द्वितीयादेर्व्यर्थत्वादिति निर्णयेऽप्युक्तम् ।

प्रमादतस्तु यन्नष्टं तावन्मात्रं नियोजयेत् ।
अन्यथा स्तेयभागी स्याद्धेम्न्यदत्ते विनाशिनि ॥

इदं तूत्सृष्टाप्रतिपादितपरमिति चण्डेश्वरः । सांप्रदायिकास्तु सर्वत्र संकोचात् प्रायश्चित्त-माचरन्ति । तदित्थमत्र प्रयोगः-'ओं' अद्य मत्प्रमादनष्टहिरण्यतुल्यपरिमाणहिरण्याप्रदानहेतुक-हिरण्यस्तेयजन्यपापानुत्पादकाम इदं प्रमादनष्टहिरण्यतुल्यपरिमाणं हिरण्यमग्निदैवतमित्यादि । दक्षिणा च देया । अत्र सुवर्णत्वजातेर्दधित्वदुग्धत्ववद्द्व्यणुकादारभ्य वृत्तेरत्र च सुवर्णत्वादीनां परमाणुवृत्तित्वे तदारब्धसकलकार्यस्य सुवर्णत्वापत्तिरिति वाढम् । अभिव्यञ्जकाभावान्नोपलब्धि-रिति चेन्न, योग्यव्यक्तिवृत्तिजातीनामभिव्यञ्जकस्यापि नियतोपलम्भापत्तिरिति । न च सुवर्णारम्भकतेजः परमाणुमात्रवृत्तिः स्यात्, तेजस्त्ववत्तेजोमात्रवृत्तित्वापत्तेरिति ।

सुवर्णरजतैरित्यत्र बहुत्वस्य प्रत्येकमन्वये वाक्यभेदः स्यात्, अत एव धवखदिरौ छिन्धीत्यत्र साहित्यलक्षणां ब्रूम इति चेत्, गुरुमतमेतत्, अन्वयप्रयोजकरूपवत्त्वं योग्यतेति भट्टैरनुपगमात् । तन्मते बाधकविरहस्यैव योग्यतात्वात् । तथा च साहित्यलक्षणां विनापि विनिगमनाविरहादुभयत्र बहुत्वान्वयेऽपि नानुपपत्तिः । न च वाक्यभेदः, क्रियान्वयितावच्छेदकनानात्वे वाक्यभेदादत्र बहुत्वस्यैकस्योभयान्वयित्वादिति ।

विवाहे श्रद्दानवाक्यं कन्यायास्तत्प्रपितामहपूर्वकम्, 'पैतापौत्रीमनुक्रमेत्' इति वचनात् । अस्यार्थः-पितृनिर्देशानन्तरं पुत्रनिर्देशः कार्यः, तेन प्रपितामहपूर्वकवाक्यतया प्रथमं प्रपितामह-निर्देशः, ततस्तत्पुत्रनिर्देशः सिद्धयति । अत्र त्रैवार्षिकादिपदवदुभयपदवृद्धया पैतापौत्रीति प्रयोगः । कन्यादानं त्वद्भिरेव कार्यम् न तु तिलादेरपि प्रवेशः,

अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते ।

इति मनुवचनात् ।

ज्योतिषे—

दधति शतभिषायां स्नानवत्यो युवत्यो दयितजनितभोगाश्लेषविश्लेषदुःखम् ।
धनमित्र कृपणानां सप्तजन्मापि तासां विफलति कुचकुम्भः कुम्भिकुम्भस्थलाभः ॥

सीतगौवरुणदैवते यदि स्नानमाचरति वामलोचना ।
सप्तजन्मविधवातिदुर्भगा स्याद् ध्रुवं मुनिवरैरिति स्मृतम् ॥

इत्यादीनि स्त्रीणां शतभिषास्नाने निषेधकानि वचनानि नित्यस्नाननिषेधकानि ? उत नैमित्तिकस्नाननिषेधकानि ? काम्यस्नाननिषेधकानि ? तत्र न तावदाद्यः, नित्यस्य शुचिविहित-कालजीवितत्वप्रयुक्ताधिकारिकत्वेन निषेद्धुमशक्यत्वात् । न द्वितीयः, तस्यापि—

नैमित्तिकानि कर्माणि निपतन्ति यदा यदा ।
तदा तदैव कार्याणि न कालस्तु विधीयते ॥

इति कात्यायनवचनेन प्राप्तस्य निषेद्धुमशक्यत्वात् । तस्मात् परिशेषाद्रागप्राप्तस्नान-निषेधकानि । अत एव

कुहूस्नानं गयायानं तिलैस्तर्पणमेव च ।

इत्यादिजीवत्पितृकस्य कुहूस्नाननिषेधो यदि समूलस्तदा रागप्राप्तस्नानविषय इति निबन्धारः । तथा च तन्नक्षत्रेऽपि स्त्रीणां नित्यं नैमित्तिकं स्नानमविरुद्धमेवेति दिक् ।

शंखलिखितौ—'न स्त्री शूद्रा शुच्येकपाण्यावर्जितेन' अत्राशुचिपदमाचमनकर्तृभिन्न-परम् । शूद्रसाहचर्यादेव एकपाणिपदमपि बहुव्रीहिणा कर्तृव्यतिरिक्तधर्मिपरमेव । तेन स्वयं वामपाण्या वर्जितमनिषिद्धमेव । अत एव बौधायनोऽपि—'मूत्रपुरीषे कुर्वन् दक्षिणहस्तेन गृह्णाति, सव्य आचमनीयम्' इति केचित्, तन्न; एकपाणिनेत्यत्रैकश्चासौ पाणिश्चेति कर्मधारयो लघवात् । साहचर्यस्याप्रयोजकत्वात्, न तु शूद्रसाहचर्यात् तस्य कर्तृत्वादन्यत्रापि लुप्ततृतीयाकर्तृपरत्वावैष-म्यार्थम् । एकः पाणिर्यस्येति बहुव्रीहेः सर्वजघन्यत्वादिति ।

यद् दिवा विहितं शौचं रात्रौ तस्यार्धमिष्यते ।
तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ॥

आपस्तम्बः—

अह्नि शौचं यथा प्रोक्तं निश्यर्द्धं तु तदिष्यते ।
पथि पादस्तु विज्ञेय आर्तः कुर्याद् यथाबलम् ॥

अत्र शौचापकर्षो निशात्वादिपुरस्कारेणेति कश्चित्, तन्न; एवं वाक्यस्यादृष्टार्थतापत्तेः, किन्तु यथोक्तशौचकरणासामर्थ्यमेवापकर्षः । 'आर्तः कुर्याद् यथाबलम्' इत्युपसंहाराच्च । मनुः—

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं तु वनस्थानां यतीनां स्याच्चतुर्गुणम् ॥ इति

दक्षः—

उषःकाले तु संप्राप्ते शौचं कुर्याद् यथार्थवत् ।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥

याज्ञवल्क्यः—

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्विकाम्॥

दक्षः—

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्॥

अत्र स्नाने सन्ध्यायां च दन्तधावनमङ्गम्, क्त्वाश्रवणादिति केचित्, तन्न;

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः।
तस्मात् सर्वप्रयत्नेन भक्षयेद् दन्तधावनम्॥

इति शातातपेन स्वतन्त्रस्यैव शुद्धिहेतुत्वेनाभिधानात्। आनन्तर्यमात्रे च क्त्वः शक्तेर्नत्वङ्गाङ्गिभावेऽपि, बहुषु व्यभिचारात्। किन्तु 'दन्तधावनपूर्विकाम्' इत्यत्र स्नायादित्यत्र च दर्शारम्भणीययोरिव कालार्थः संयोगः।

विष्णुः—

कनीन्यग्रसमस्थौल्यं सुकूर्चं द्वादशांगुलम्।

कूर्चं चूर्णिताग्रम्, द्वादशांगुलं वितस्तिमात्रम्।

अष्टांगुलेन मानेन तत्प्रमाणमिहोच्यते।
प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत्॥

अत्र च वितस्त्यादौ परिमाणचतुष्टये फलभूम्ना षोडशि ग्रहणाग्रहणवद्विकल्प इति भ्रान्ताः। अत्र परिमाणचतुष्टयेऽपि शुद्धेरविशेषाद् वितस्तिरिति प्रथमः कल्पः, तदभावे प्रादेशमात्रमिति मध्यमः, तदभावेऽष्टांगुलमित्यपकृष्ट इति तृतीयः कल्पः, तदभावे चतुरंगुलमित्यन्तापकृष्टः चतुर्थः कल्प इति। तत्र हि काम्यत्वादस्तु फलभूम्ना विकल्प इति।

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
प्रतिजप्य च मन्त्रेण भक्षयेद् दन्तधावनम्॥

मन्त्रस्तु तत्रैव—

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च।
ब्रह्मप्रज्ञां च मेधां च त्वन्नो धेहि वनस्पते?

जाबालः—

न पारक्ये सदा स्नायान्न भुक्त्वा न महानिशि।
नार्द्रमेकं च वसनं परिदध्यात् कथञ्चन॥ इति।

अत्र हि—एकवासस्त्वस्य सर्वदा निषेधाद् येन केनापि प्रकारेण द्विवाससा भवितव्यमित्यर्थः। तेन स्नानकाले द्विवस्त्रत्वनियम इति तत्त्वम्। यत्तु—

स्नानं तर्पणपर्यन्तं कुर्यादेकेन वाससा।

इति पठित्वा तर्पणपर्यन्तं स्नानमेकवाससा कार्यमिति प्राच्यमतम्, तदप्यपास्तम्, उक्तवचनस्य निर्मूलत्वात् । समूलत्वे वा जाबालवचनविरोधेनैकपदस्यैकजातीयपरत्वादन्यथा 'कदाचन' इत्यस्य बाधापत्तेः । केचित्तु 'एकवस्त्राः प्राचीना वितिनः' इत्यादिपारस्करवचनैकवाक्यतया प्रथमाहे स्नाने तर्पणे चैकवस्त्रत्वमिच्छन्ति, तत्रापि प्रतिहस्तकचरणैः प्रथमाहप्रेततर्पणे सिद्धवचनसमक्ष इति ।

नरसिंहपुराणे—

ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥

अत्र च मन्त्रं विनैव नमश्शब्दमभिधाय शूद्रः स्नानमाचरेदिति वाक्यार्थे सिद्धे पद्मपुराणीयस्नानेऽपि नाधिकार इति ऋजवः, तन्न; तूष्णीमेवेत्यनेनाविद्यस्य शूद्रस्य वैदिकमन्त्रपाठो निषिध्यते, न तु मन्त्रान्तरम् । 'मन्त्रवत् स्नानमिष्यते' इत्यत्र पूर्वार्धे वैदिकमन्त्रस्यैवोपस्थितत्वेन द्वितीयार्धे तस्यैव निषेधात्, अन्यथा सकलनिबंधविरोधः स्यादिति ।

दक्षः—

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥

अत एव प्रातरपि मन्त्रवत् कातीयकल्पादिना स्नानम् 'तथा प्रातरि'ति श्रुतेः ।

मलापकर्षणं तीरे मन्त्रवत्तु जले स्मृतम् ।
सन्ध्यास्नानमुभाभ्यां तु स्नानदेशाः प्रकीर्तिताः ॥

अत्र मन्त्रस्नानं जल एव नियम्यते । तेन जल एव तत्कार्यम्, न तु स्थलेऽपि 'गेहे चेत्तदमन्त्रवदि'ति श्रुतेः । अत्र वदन्ति—

अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं विधीयते ।
तीर्थं प्रकल्पयेद् विद्वान् मूलमन्त्रेण मन्त्रवित् ॥

इति पद्मपुराणदर्शनात् स्थलेऽपि मन्त्रान्वय इति, तन्न, 'अनुद्धृतैरुद्धृतैर्वाः तोयैः स्नानं क्रियते' इत्यस्य प्रथमखण्डार्थत्वात् । आशयस्थ एव स्नानकरणपक्षे 'कयेतिकर्तव्यतया स्नानम्' इत्याकांक्षायां द्वितीयखण्डार्थान्वियात्, अन्यथा पद्मपुराणे दक्षविरोधः स्यादिति । गौडास्तु मन्त्रमात्रनिषेधबलादितिकर्तव्यतान्वयः स्थलेऽपि निराबाध एवेति, तन्न, विभिद्यान्वये पर्यवसिते तदितिकर्तव्यतायास्तत्रैवान्वयात् । किञ्च,

सरस्सु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र क्रियामते ॥

इति शंखेन क्रियान्वयस्य दर्शितत्वादिति । 'अथातो नित्यस्नानं नद्यादौ" इत्युपक्रम्य "सूर्याभिमुखो मज्जेत्" इति कात्यायनेनाभिधानात् । प्रवाहेऽपि सूर्याभिमुखं मज्जनमिति केचित्, तन्न ।

नद्यां सरस्सु च स्नायात् प्रतिस्रोतस्थितो द्विजः ।
तडागादिषु तोयेषु प्रत्यकं स्नानमाचरेत् ॥

इति नरसिंहपुराणात् ।

स्रोतसां संमुखो मज्जेत् यत्रापः प्रवहन्ति वै ।
स्थावरेषु गृहे चैव सूर्यसंमुखमाप्लवेत् ॥

इति याज्ञवल्क्यवचनाच्च । अत एव प्रथममज्जनं सूर्याभिमुखमेव प्रवाहेऽपि, कात्यायनानुरोधात् । द्वितीयं तृतीयं तु प्रवाहाभिमुखमिति प्रत्युक्तम्, सूर्याभिमुखो मज्जेदिति कात्यायनवचनं तडागाद्यभिप्रायकमेकवाक्यातावलादिति । 'सवस्त्रोऽहरहराप्लवेत्'इति सांख्यायनगृह्याद् गृहस्थस्य प्राप्तं स्नानं गङ्गायाम्, तदलाभे पुण्योदके, तदलाभे परोत्सृष्टे, तदलाभे पुण्येनोद्धृतेनोदकेन । विहितक्रियापि तेनैव कार्या ।

शिरःस्नातस्तु कुर्वीत दैवं पित्र्यमथापि वा ।

इति मार्कण्डेयपुराणात् । रुग्णश्चे दुष्णोदकेनापि, एतदशक्तावशिरस्कम्, तदशक्तावप्यार्द्रेण वाससा गात्रसंमार्जनम् । तदाह जाबालः—

अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वापि दैहिकं मार्जनं विदुः ॥

प्रातःस्नानेन विशेषविहितेतरस्मिन् कर्मणि नाधिकारः । अत एव—

अस्नाताशीः पुमान् नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥
जप्तुकामः पवित्राणि अर्चिष्यन् देवताः पितॄन् ।
स्नानं समाचरेन्नित्यं क्रियाङ्गं तत् प्रकीर्तितम् ॥

इति षोढास्नानपरिसंख्याने शंखेनैव—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं ततः षष्ठं षोढास्नानं प्रकीर्त्तितम् ॥

इति प्रातःस्नानस्य नित्यत्वेनाहःकर्त्तव्यस्य क्रियाङ्गत्वेन द्वयोर्भेद उक्तः, अन्यथा परिसंख्यानभङ्गः स्यात्, अत एवाघारमाघारयतीतिवत् 'प्रातःस्नातः सहाम्बरः' इत्यस्यापि स्नानान्तरवारकत्वेनैव सार्थकत्वम्, न त्वङ्गताबोधकत्वेनेति परेषां मतमपास्तम् ।

यदा तु सौत्रं स्नानं तदा तत्कल्पेनैव तर्पणमपि, आरभ्याधीतत्वात् । एवं पद्मपुराणीयकल्पेऽपि । यदि तु नरसिंहपुराणोक्तं स्नानं विधीयते, तदा वैधस्नानतया तस्य तर्पणाङ्गकत्वे सिद्धे उभयोरप्यदृष्टजनकतयानारभ्याधीतविष्णुपुराणीयतर्पणमेवाङ्गतयान्वेति, स्वतन्त्रत्वात्, नष्टाश्वदग्धन्यायात्, तक्षसूत्राधिकरणविरोधाभावाच्च ।

उद्धृतोदकेन स्नाने तु स्नानाङ्गतर्पणस्योक्ताधिकरणविरोधेन 'वृथा तूष्णोदके स्नानम्' इत्यादिना स्नानस्यादृष्टजनकत्वेनाङ्गापूर्वस्य कुत्रोपकारकत्वम् ? अतोऽलौकिकस्य लौकिकाङ्गत्वाभावान्नाङ्गाङ्गिभावः । ननु तत्स्नानस्याप्यलौकिकत्वमेव 'गेहे चेत्तदमन्त्रवदि'त्यादिना तस्यापि विधानादिति न, वेदबोधितकर्त्तव्यताविशिष्टस्यैवालौकिकत्वस्य निर्वक्तव्यत्वात्, अन्यथा प्रकृतेऽपि तर्पणस्याङ्गत्वापत्तेः । किन्नश्छिन्नमिति चेत्, 'वृथा तूष्णोदके स्नान'मित्यस्यानुरोधेनोक्ताधिकरण-

विरोधापत्तेः । हन्त ! तर्हि इतिकर्त्तव्यतान्वयोऽस्तु, तदमन्त्रवदित्यादिना तत्र मन्त्रमात्रपर्युदासात्, "सरस्सु देवखातेषु तीर्थेषु च नदीषु च । क्रियास्नानं समुद्दिष्टम्" इत्यादिविशेषवचनेन नद्यादावेव तद्विधानात् ।

एवं च पञ्चयज्ञान्तर्गतं स्वतन्त्रतर्पणमेव विष्णुपुराणविधिना कार्यम् । तच्च स्नानं न विष्णुवाप्यादौ, न वा पतितादिकारिते, न वानुत्सृष्टपरकारिते, न वा शूद्रकारिते, न वा स्वकारित उत्सृष्टेऽनुत्सृष्टे वा कार्यम् ।

दिवास्नाने तु स्नानसन्ध्यातर्पणानीति क्रमः, कात्यायनसूत्रानुरोधात् । एवं प्रातरपि, यथाऽहनि तथा प्रातरिति स्मरणात् । कातीयकल्पे प्रयोगविधेरहर्मात्रविषयतया प्रातःस्नाने तर्पणानन्तरं सन्ध्यावन्दनमिति भ्रान्ताः । तन्न; स्नानविधिरेष स्नानविधिरेष इति द्वयावृत्त्या माध्याह्निकसकलस्नानेतिकर्त्तव्यतायाः प्रातःस्नानेऽप्यतिदेशात् । अत एव 'यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः' इत्यपि संगच्छत इति सन्ध्यावन्दनाप्राप्तौ सर्वत्र स्नानानुपदमेव तर्पणम्, उत्सर्गतोऽङ्गानां प्रधानदेशकालान्वयनियमादिति दिक् ।

अथ स्वखानितवाप्यादौ स्वस्यापि स्नानाधिकारोऽस्तु । तथा हि तत्राप्रतिष्ठिते स्नानम् ? प्रतिष्ठिते वा ? न तावदाद्यः—

यन्न सर्वार्थमुत्सृष्टं यच्चाभोज्यनिपानजम् ।
तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि ॥
अप्रतिष्ठितपानीयेष्वपेयं सलिलं भवेत् ।

तथा 'अनुत्सृष्टं तु मूत्रवदि'त्यादि नानावचनेन तस्याकर्मण्यत्वप्रतिपादनात् । अत एव विष्णुवाप्यादौ परकारिताप्रतिष्ठिते च परेषां स्नानमपास्तम्, चौर्यापत्तेः । न द्वितीयः, स्वत्यक्ते स्वोद्देश्यतायाः देवताधिकरणविरोधेन निरस्तत्वात् । नापि पुरुषान्तरवदौपादानिकं कर्तुरपि स्वत्वमस्त्विति स्वत्यक्ते स्वोपादानस्य क्वचिदप्यदर्शनात् । ननु देवताधिकरणे इन्द्रस्त्यागकर्ता स एवोद्देश्य इति समानप्रकारकत्वादस्तु विरोधः, प्रकृते चैकस्त्यागकर्ता,

सर्वभूतेभ्य उत्सृष्टं मयैतज्जलमूर्जितम् ।
रमन्तु सर्वभूतानि स्नानपानावगाहनैः ॥

इति मन्वादिवचनबलात् सर्वभूतानामुद्देश्यत्वेन समानप्रकारकत्वाभावान्नविरोध इति चेत्, भ्रान्तोऽसि; त्यागकर्तृत्वत्यागोद्देश्यतयोर्विरोधेन स्वसमानप्रकारकत्वस्याप्रयोजकत्वात् । अन्यथा ब्राह्मणोद्देशेन त्यक्तस्य हिरण्यादेः स्वयमप्युपादानप्रसङ्गः । तस्मात् त्यागवाक्ये सर्वभूतपदं यजमानेतरसर्वभूतपरमिति । विष्णुः—'परनिपानेषु न स्नानमाचरेत्, आचरेद्वा पञ्चपिण्डानुद्धृत्यापदि' । याज्ञवल्क्यः—'पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिणि' ।

बोधायनः—

बहन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः ।
प्रातरुत्थाय कुर्वीरन् देवर्षिपितृतर्पणम् ॥
निरुद्धासु न कुर्वीरन्नंशभाक् तत्र सेतुकृत् ।
तस्मात् परकृतान् सेतून् कूपांश्च परिवर्जयेत् ॥
उद्धृत्य वा त्रीन् पिण्डान् कुर्यादापत्सु नो सदा ।
निरुद्धासु च त्रीन् पिण्डान् कूपात्तु त्रीन् घटान् सदा ॥

शंखः—

"वापिकूपतडागोदपानेषु सप्तपञ्चत्रीन् पिण्डानुद्धृत्य देवतास्तर्पयित्वा पितृपरस्तर्पयेत्"। पैठीनसिः—"अथ स्नानविधिः परकृतान् सेतून् कूपांश्च परिवर्ज्जयेदंशभाक्, तत्र सेतुकृत् त्रीन् पिण्डानुद्धृत्य स्नायात्"।

अत्रेदं रहस्यमप्रतिष्ठिते परकृते तडागे सप्तनिपाने पञ्चसेतुप्रतिरुद्धे तु जले त्रीन् पिण्डानुद्धृत्य कूपादम्बुघटत्रयमुद्धृत्य स्नायात्। न च विष्ण्वादिवचनानामप्रतिष्ठितपरतैव, मानववचननिषेधबाधाक्षमत्वादिति।

एषु तु तर्पणकरणेऽम्बुघटत्रयोद्धारोऽन्यत्र सप्तानां पिण्डानां पञ्चानां वोद्धारः। पिण्डं श्रीफलप्रमाणम्, पिण्डपदान्निरुपाधेस्तथैवावगमात्। अत्र स्नानतर्पणयोः करणपक्षे उभयप्राप्तस्यापि पिण्डोद्धारस्य स्नानात् प्राक् तन्त्रेणैवानुष्ठानमङ्गानां तन्त्रोपदेशात् प्रयोगैक्यात्।

उपस्थानादिर्यस्तासां मन्त्रवान् कीर्तितो विधिः।
निवेदनान्तं तत्स्नानमित्याहुर्ब्रह्मवादिनः॥

इति याज्ञवल्क्येन निवेदनान्तस्य स्नानत्वाभिधानात्। एषु तु स्नानमकृत्वा तर्पणपक्षे तर्पणाव्यवहितप्रागेव स कार्य इति। यत्र त्वङ्गतर्पणेनैव प्रसंगात् स्वतन्त्रतर्पणसिद्धिस्तत्र न पृथक् पिण्डोद्धारः कार्य इति। अंगतर्पणे तु न पृथक् पिण्डोद्धारो न वा तर्पणानुष्ठानमनुपदेशादिति तत्त्वम्।

सन्ध्यावन्दने चादावघमर्षणसूक्तेन यदाचमनं तद् द्विरावर्त्तते 'आचान्तः पुनराचमेद् ऋतमित्यभिमन्त्रितम्' इति वचनात्। अत्र च ऋषिच्छन्दोविनियोगानां ज्ञानमपेक्षितम्। तत्र न शब्दप्रयोगः कार्यः, मानाभावादसंबंधव्यवायापत्तेश्च।

सन्ध्यावन्दनं वाजसनेयिनां स्थल एव 'उत्तीर्य वाससी परिधाय' इति कात्यायनेनाभिधानात्। स्थलाशुचित्वपक्षे जलेऽपि कार्यम्।

यत्राशुचिस्थलं वा स्यादुदके देवताः पितॄन्।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम्॥

इत्यादिना तदुदीच्यस्य तर्पणस्य जले विधानात्।

स्मृत्वोंकारं तु गायत्रीं निबध्नीयाच्छिखां ततः।

इति व्यासेन विशिष्याभिधानात्। सन्ध्यावन्दनस्यादौ बद्धापि शिखोन्मोच्य बन्धनीयेति भ्रमो हेयः। साधारणाङ्गे प्रधानदेशकालान्वयानियमात्। ननु तर्हि विशेषाभिधानमनर्थकं स्यात्, न स्याद् यदि तत्काले मुक्तशिखः स्यात्तदानेन बन्धनीयेति तदर्थत्वात्, अन्यथा तात्पर्यगौरवादिति।

प्रातःस्नाने तु साग्निना गायत्रीजपो भूयान्न कार्यो होमलोपप्रसंगात्। निरग्निना तु स कार्यः 'सहस्रं परमां देवीम्' इत्यादिस्मरणात्। विभ्राडित्यनुवाक् परसंकल्पमण्डलब्राह्मणैस्तु चतुर्भिर्यदुपस्थानं तत्सायंसन्ध्यायाम्। प्रातःसन्ध्यायां तु नास्त्येव, मध्याह्नसन्ध्यायां काम्यम्, मध्याह्न उदये वापि विभ्राडादीच्छया जपे'दिति वचनात्। यद्यपि 'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु

तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्' इति कात्यायनेनाभिधानादध्यापनमेव प्रतीयते । तथाप्यहरहः स्वाध्यायमधीयीत'इति ब्रह्मयज्ञोत्पत्तिश्रुतेः श्रुतिजप एव ब्रह्मयज्ञ इति । मनुः—

नैत्तिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ।

अत्र यद्यपि ब्रह्मयज्ञे नित्यत्वादेवानध्यायदोषो नास्ति, तथाप्यनध्याये मनसा स कार्यः । 'मनसाधीयीत'इत्यापस्तम्बसूत्रादिति ।

## अथ दर्भोच्चयः

मरीचिः—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अजातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

नभसीति शुक्लादिक्रमेण । तेन श्रावणपूर्णिमानन्तराग्रिमामावास्यायां ये कुशा आहृतास्तेऽजातयामाः । निर्णये तु भाद्रामावास्यापदं गौणचान्द्रेणेति सर्वं रमणीयम् । अत एव मासे नभसीति वचनात् श्रावणामावास्याऽऽहृतान् दर्भानिति कृत्यप्रदीपे सिद्धवल्लिखितमिति ।

## अथ त्याज्यकुशाः

पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् ।
सूत्रोच्छिष्टे धृता ये च तेषां त्यागो विधीयते ॥

इति लघुहारीतवाक्ये पितृपदं शक्त्या जनकादिषट्पुरुषवाचकमेव, न तु यावत्तर्पणीयपरं प्रमीतमात्रपरं वा, लक्षणापत्तेः । न च विनिगमनाविरहात्तातमात्रपरतैवास्तु, प्रकरणबलेन षट्पुरुषपरताया न्यायत्वात् । ननु 'परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जडः' इत्यत्राजहत्स्वार्थ-लक्षणया पितृपदस्य प्रमीतमात्रपरत्वादत्रापि तथास्त्विति चेन्न; दृष्टत्वं हि न नियामकम्, किन्तु प्रतीतिरूपफलबलेन तत्परत्वम्, अनन्यलभ्यतया तु शक्तिरिति सुष्ठूक्तम् । षट्पुरुषतर्पणमोटकमपहाय मात्रादितर्पणं मोटकान्तरेण कार्यमिति कात्यायनः ।

दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्मसु ।
सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥ इति ।

अतो हेतोः सन्ध्यादिकर्मसु दर्भमात्रं प्रशस्तमित्यर्थः । तत्रापि केन क्रमेण धारणमित्यत्रोप-तिष्ठते 'सव्यः' इति । स एव पवित्रं लक्षयति—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

लघुहारीतः—

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्याद्धिरण्यरजतैः कुशैः ॥

इत्यत्रानयोः सामान्यविशेषभावेनान्वय इति केचित्, तन्न; विशेषोक्तेः समुच्चयस्यैव वाक्यार्थत्वात् । न च हारीतवाक्य एव 'सव्य' इत्यादेरन्वयः, कात्यायनवाक्य एवाकांक्षासत्वे-

नान्वयस्य जातत्वात्, परत्रान्वये गौरवाच्च । अत एव सर्वत्र दक्षिणहस्तानामिकायां कुशत्रय-हिरण्यरजतानि धारणीयानीति परमगुरवः ।

पितुः सन्यासादिना पातित्येन तर्पणानर्हत्वे जीवत्पितृकोऽपि पितामहादितस्तर्पणं कुर्यात् ।

यदि स्याज्जीवत्पितृक एतान् दिव्यान् पितॄंस्तथा ।
येभ्यो वापि पिता दद्यात् तेभ्यो वापि च दापयेत् ॥

इति याज्ञवल्क्यवाक्येन स्फुटमेव तादृशपितृसत्वेऽपि पुत्रस्याधिकारप्रतीतेः ।

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

इत्यनेन कात्यायनेनापि तस्य पितामहोपक्रमप्रतिपादनात्, पितुरसत्वे सुतरामिति । त्रिदण्डिपुत्रेण तु ब्रह्मीभूतस्य पितुरपि तर्पणादिकं कार्यमेवापवादकाभावात् । प्रेतक्रियायाः साम्वत्सरिकैकोद्दिष्टस्य परं निरसनात्, श्राद्धचिन्तामणिप्रभृतयोऽप्येवम् । यद्यपि कात्यायन-कल्पे तत्तत्तर्पणे तत्तन्मन्त्रान्वयः श्रूयते, तथापि कल्पान्तरेणापि तर्पणे मात्रा नियता एव ।

मन्त्रैस्तु देयमुदकं पितॄणां प्रीतिवर्द्धनैः ।
उदीरतामङ्गिरस आयन्तूर्ज्जमित्यपि ॥
पितृभ्य इति ये चेह मधुवाता इति त्र्यृचम् ।
आवाह्य पूर्वमन्त्रैरास्तीर्य च कुशान् शुचीन् ॥
प्रागग्रेषु सुरान् सम्यग् दक्षिणाग्रेषु वै पितॄन् ।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा ॥

इति याज्ञवल्क्यवचनेन तर्पणमात्र एव मन्त्राणां करणत्वप्रतीतेः । किञ्च—

विना दर्भैर्विना मन्त्रैः पितॄणां नोपतिष्ठते ।

इत्यादिना शंखेनामन्त्रकतर्पणे निन्दाप्रतिपादनात् । हन्तैवम्

दर्वीहोमस्य याकांक्षा पराङ्गग्रहणं प्रति ।
आकांक्षेव कुलस्त्रीणां स्वाङ्ग एव निमज्जति ॥

इति श्रवणात् पराङ्गग्रहणे दर्वीहोमाधिकरणविरोध इति चेत्, भ्रान्तोऽसि, लिखित-वचनेन—

तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदाभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण चाप्यथ ॥

इत्याद्यनेकवचनेन तर्पणमात्र एव मन्त्राङ्गताप्रतीतेस्तस्मादत्रामत्सरेण भवितव्यमिति । तर्पणे तु देवानां वामान्वारब्धो दक्षिणकरः,

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ॥

इति वचनात् ।

पितॄणामञ्जलित्रयम्—

त्रींस्त्रीं जलाञ्जलीन् दद्यादुच्चैरुच्चतरन्नरः ।

इति वचनात् । पात्रेण तर्पणपक्षेऽपि नैतयोरपवादः, किन्तु समुच्चय एव, सौवर्णेन राजतौदम्बरेण पात्रेण खड्गपात्रेण शङ्कुना वाप्युदकं पितृतीर्थं स्पृशन् दद्यादिति शंखवचनेनाञ्जलेरपेक्षणीयत्वात् । यत्तु 'सौवर्णेन'इत्यादिशंखवचनात् । तथा—

रजते मनसा यच्च सुवर्णे यच्च निर्गतम् ।
तिलेषु च मुहूर्तेन ताम्रे च द्विमुहूर्त्ततः ॥
दर्भे सप्तमुहूर्तं तु मन्त्रयुक्तं तदक्षयम् ।

इति मरीचिवचनात् ।

राजतैर्भाजनैरेषामथो वा रजतान्वितैः ।
वार्यपि श्रद्धया दत्तमक्षयायोपकल्प्यते ॥

इति मनुवचनाच्च पितृतर्पण एव तत्पात्राणां करणत्वम्, न तु देवर्षितर्पणेऽपि, अनभिधानादिति तदसत् । देवर्षितर्पणेऽपि पात्राणां करणत्वमविरुद्धमनिषेधात्, एकत्र निर्णीतेति न्यायात् । तथा—

शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम् ।
तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ॥

इति विष्णुपुराणवचनेन करस्याप्यपेक्षणीयत्वात् । ननु गोदोहनाधिकरणविरोधादस्तु विकल्प इति चेद् वैषम्यात्, तत्र हि प्रणयनस्य विधेयतया करणाकांक्षायां चमसान्वये गोदोहनस्य निराकांक्षतया विकल्पः, अत्र तु "नोदकेषु न पात्रेषु न क्षुब्धो नैकपाणिना" इत्यनेन, तथा "तर्पणे द्वितयं कुर्यात्"इत्यनेन समुच्चय एवेति तत्त्वम् ।

तर्पणं तु पुरुषषट्कस्त्रीषट्कयोर्नित्यमिति सर्वत्र प्राप्तः स्नानादौ देवाङ्गतया कर्त्तव्यमिति । अत्र—

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम् ॥

इति वचनाद् ब्रह्मादीनामेकैकोऽञ्जलिरिति । यद्यपि 'देवानामञ्जलिर्नास्ति अन्वारब्धेन सव्येन' इत्युक्तगोतमवचनात्, तथापि देवतर्पणे वामान्वारब्धदक्षिणकर एवाञ्जलिपदेनोक्त इति द्रष्टव्यम् । उद्धृतोदकेन स्नानकरणपक्षेऽलौकिकस्य तर्पणस्य लौकिकस्नानाङ्गकत्वस्य तक्षसूत्राधिकरणविरोधेन निरस्तत्वात् ।

तर्पणं तु शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥

इति वचनात् प्राप्तस्य तर्पणस्य स्वतन्त्राहःकर्तव्यत्वेन तदानीमनुपस्थितेरुभयथाप्युदयात् प्राङ् न तर्पणानुष्ठानम् । एवं नद्यादौ प्रातःस्नाने कृते उदयानन्तरमङ्गतर्पणे कृते उद्धृतोदकेन मध्याह्नस्नानकरणे स्वतन्त्रतर्पणमावर्त्तत एव, अहःकर्त्तव्यत्वेन प्रसङ्गाभावादिति । शङ्खः—

नोदकेषु न पात्रेषु न क्षुब्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते ॥ इति ।

अत्र च भूमिपदं शुष्कपरम्, तेन दार्वादावपि तर्पणजलं प्रक्षेप्तव्यमिति भ्रमो हेयः, लक्षणाबीजस्यानुपपत्तेरभावादिति। शङ्खलिखितौ "स्रवन्तीं वृथा नातिक्रामेदनवसिच्य।" अनवसिच्य तर्पणमकृत्वा न अतिक्रामेत् लङ्घयेत्, वृथा निष्प्रयोजनम्।

देवाश्च पितरश्चैव कांक्षन्ति सरितं प्रति।
अदत्ते तु निराशास्ते प्रयान्ति च यथागतम्॥

अत्राङ्गाधिकारमुखेन प्रधानाधिकारोऽपि बोध्यते। तथा चैकत्र दिने कृतमध्याह्नस्नानस्यापि नानानदीलाभे नानास्नाने स्नानाङ्गतर्पणे चाधिकार एव, लिखितवचनात्।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते।
तर्पणं तु भवेत् तस्य अङ्गत्वेन प्रकीर्त्तितम्॥

इति वचनादङ्गत्वेऽपि सन्ध्यावन्दनव्यवधानेनाङ्गानुष्ठानम्, सूत्रकारवचनात्। अत एव यत्र सन्ध्यावन्दनप्रसङ्गस्तत्राव्यवधानमेवापवादकाभावात्। काम्यतर्पणं तु सकृदेव, तदावृत्तौ बीजाभावात्। ननु—

न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये॥

इत्यादिनानवरतस्नाननिषेधान्नैवमिति चेन्न; मानवस्नाननिषेधस्य श्रद्धाजाड्यादिप्रयुक्तानवरतस्नाननिषेधपरत्वात्,अन्यथा गयादौ तत्तत्तीर्थे तत्तत्स्नानबाधापत्तिरिति दिक्।

तर्पणवाक्ये चास्मत्पदं देयम्। न च सम्बन्धिशब्दत्वादेव तल्लाभः, सम्बन्धिपदानां समभिव्याहृतविशिष्टस्वार्थबोधकत्वव्युत्पत्तेः, प्रकृते तर्पयितृबोधकपदाभावात्। तर्पणवाक्यं तु— "अद्यामुकगोत्रोऽस्मत्पिताऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः" इति कल्पतरुः। सपदास्मत्पदे विहायैवमेवेति रत्नाकरः। कल्पतरुप्रयोगे सकारमात्रस्य त्याग इति वर्द्धमानाह्निकम्। एवमेव परमगुरवोऽपि।

तर्पणं तु वाजसनेयिनां स्थलस्थानां स्थल एव। 'उत्तीर्य वाससी परिधाय' इत्यनन्तरं कात्यायनेन तत्कथनात्। स्थलाशौचादिपक्षे जलस्थैरपि तत्कार्यम्। यदाह योगी याज्ञवल्क्यः—

यत्राशुचिस्थलं वा स्यादुदके देवताः पितॄन्।
तर्पयेत् तु यथाकाममप्सु सर्वं प्रतिष्ठितम्॥

अत्रेदं रहस्यम्। जलसन्ध्यावन्दनपक्षे उपस्थानपर्यन्ता सन्ध्या जले, ततस्तर्पणम्। तत उत्तीर्य शुष्कवाससा आवाहनाङ्गन्याससहितगायत्रीजपो ब्रह्मयज्ञश्च स्थले कार्यः।

यदार्द्रवासाः कुरुते जपहोमतपांसि च।

इत्यादिना जले जपमात्रनिषेधात्।

कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत्।
गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्थाय तां जपेत्॥

इति गोभिलेन विशिष्य निषेधाच्च, तस्य च सामशाखास्थत्वेऽपि कात्यायनाप्रतिषिद्धतयाग्निमुखत्वनिर्देशेन च वाजसनेयिकेऽपि जागरूकत्वात्। अत्र च कात्यायनोक्तक्रमभङ्गोऽपि गोभिलयाज्ञवल्क्यैकवाक्यतानुरोधात्। क्रमभङ्गभीता वृद्धास्तु—

यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेत् ।
अन्यथा तु शुचौ भूम्यां कुशोपरि समाहितः ॥

इति पठित्वा जलसन्ध्यावन्दनपक्षे जल एव गायत्रीजपमाचरन्तीति । कार्ष्णाजिनिः—

नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ध्वमानसः ।
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ॥

तथा—

आपो देवगणाः सर्वे आपः पितृगणास्तथा ।
तस्माज्जले जलं देयं पितृभ्यो दत्तमक्षयम् ॥

तथा—

देवतानां पितृणां च जले दद्याज्जलाञ्जलिम् ।

यमः—

भूमौ यदापो दीयन्ते दाता चैव जले स्थितः ।
वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित् ॥

याज्ञवल्क्यः—

आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान् शुचीन् ।
प्रागग्रेषु सुरान् सम्यग् दक्षिणाग्रेषु वै पितॄन् ॥
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा ।

तदेतेषां वचनानां बलेन जलस्थेन जल एव, स्थलस्थेन स्थल एव तर्पणजलं प्रक्षेप्यम् । तत्रापि कुशेष्वेव, लिखितवचनात् । एवं च नाभिमात्रे जले तिष्ठता तर्पणं कार्यमिति पर्यवसिते 'जलेऽप्यासीनो दद्यात्'इति प्राचां मतमपास्तम् । वस्त्रनिष्पीडनोदकदानं तु जलतर्पणपक्षेऽपि शुष्कवाससा भूमावेव कुशत्रयोपरि कार्यम्

असंस्कृतप्रमीतानां भूमौ दद्याज्जलाञ्जलिम् ।

इति वचनात् ।

जलमध्ये तु यः कश्चिद् द्विजातिर्ज्ञानदुर्बलः ।
निपीडयति यद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥

इति शातातपवचनाच्च ।

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
सर्वं तन्निष्फलं प्रोक्तं बहिर्जानु च यत्कृतम् ॥

इति वचनाच्च ।

असंस्कृतप्रमीतोद्देश्यकत्वञ्च "अन्नप्रकरवत्तस्याप्यपसव्येन पीडनम्"इति वचनात्, अन्नप्रकरवदित्यभिधानादास्तृतकुशत्रयायां भूमौ कार्यम् । मोटकान्वयोऽप्यत्रानपवादात् । न चान्नप्रकरवदित्यनेनैव तद्बाधः, संकोचापत्तेरिति । तद्वासश्छालनं तद्दानादव्यवहितप्रागेव, अपूर्वरूपोपकारजनकत्वे सत्यसाधारणत्वात् । न च 'विशुद्धये' इति वचनाद्विशेषणासिद्धिरिति वाच्यम्, विशुद्धेरप्यदृष्टविशेषत्वादिति । असंस्कृतप्रमीतानां तु तर्पणजलं जलस्थेनापि कुशव्यतिरिक्तभूमावेव प्रक्षेप्यम् ।

देवतानामृषीणां च जले दद्याज्जलाञ्जलिम् ।
असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिं ॥

इति कार्ष्णाजिनिना विशिष्यैवाभिधानात् । षट्पुरुषतर्पणे स्वधा नम इति वाक्यम् ।

यदि स्याज्जीवत्पितृक एतान् दिव्यान् पितॄंस्तथा ।
येभ्यो वापि पिता दद्यात् तेभ्यो वापि च दापयेत् ॥
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ।
वसून् रुद्रांस्तथादित्यान् नमस्कारस्वधान्वितान् ॥
एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ।
आचार्यान् स्वान् पितॄंश्चैव पितृप्रभृतिनामतः ॥

इति याज्ञवल्क्यवचनात् । नमस्कारस्वधान्वितानित्यादेर्वक्ष्यामाणानां सर्वेषामन्वयोऽविशेषात् । तेन वस्वादीनामिव स्वपित्रादीनामपि वक्ष्यमाणपदार्थानां 'स्वधा नमः' इत्येव त्यागवाक्यम् । यत्तु नमस्कारस्वधान्वयो दिव्यपितॄणामेव, वक्ष्यमाणत्वादविशेषेऽपि दिव्यपितृत्वात्, न तु स्वपितॄणामपि, दिव्यत्वाभावेन नमोयोगे हेत्वभावात् । वाक्यस्य च वस्वाद्यन्वयेऽपि चरितार्थत्वादिति प्राञ्चः, तन्न; वाचनिकेऽर्थे न्यायाननुरोधादविरोधिश्रुतेः । मात्रादिषु सर्वेषु स्वधाकारमात्रम्,

माता पितृष्वसा चैव मातुलानी पितृष्वसा ।
दुहिता चैव स्वसा चैव शिष्यर्त्विग्ज्ञातिबान्धवाः ॥
नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वशः ।

इति वचनात् ।

योगियाज्ञवल्क्यः—

आवाह्य पूर्ववन्मन्त्रैरास्तीर्यं च कुशान् शुचीन् ।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा ॥

पूर्ववदिति योगिसंहितायामेव श्राद्धप्रकरणे विहितैः, तेन "विश्वेदेवास आगत, विश्वेदेवाः शृणुतेमम्" इति ऋग्भ्यां देवानावाह्य तर्पयेत् । 'उशन्तस्त्वेति आयन्तु नः' इति ऋग्भ्यां पितॄनावाह्य तल्लिङ्गैर्मन्त्रैस्तर्पयेदित्यर्थः । ननु 'योगशास्त्रं च यत्प्रोक्तम्' इति तेनैव संहितान्तरोऽभिधानात् तत्संहितायामेव प्राथम्यं व्यवसीयते, तथा च तत्रैवोक्तम् 'तर्पणे श्राद्धावाहनमन्त्रस्य पूर्ववदित्यतिदेशो न युक्तः, न हि वक्ष्यमाणमतिदेष्टुं शक्यते' किं च विश्वेदेवा इति ऋचेति उशन्तस्त्वेत्यनयावाह्येति श्राद्धे तेनैवोक्ते, तथा च मन्त्रैरिति बहुवचनमनुपपन्नम् । न च संभूय पठितानाञ्चतुर्णां बहुवचनोपपत्तिः, तेनैवानयोर्जपे विनियोगकथनात् । किं च लिङ्गाद्यभावाद् ब्रह्मादिप्रकाशकत्वानुपपत्तिः । तस्मादेवं योजना—आवाह्य सुरांस्तर्पयेत्, आवाह्य पितॄंस्तर्पयेत् । पूर्ववद् देववत् । तेन पितृतर्पणेऽपि प्रणवस्तृप्यतामिति प्राप्यते । तत्रापि कस्य मन्त्रस्य कुत्र विनियोग इत्यपेक्षायां तल्लिगैरिति, तस्मादावाहनम्, देवा आगच्छन्तु इत्यनेनैव, प्रकाशकत्वात् । पितॄणां तु कार्ष्णाजिनिकथितक्रमेणेति चेन्न एतस्य, मन्त्रत्वाभावात् । तस्माद् व्याहृतिमन्त्रेण देवावाहनम्, आदेशबलात् । पित्राद्यावाहने तु त्रयो मन्त्रा एव 'आयन्तु नः' इत्यस्यापि समवेतार्थत्वात् ।

वस्तुतस्तु "आस्तीर्य च कुशान् साग्रांस्तानावाह्य स्वमन्त्रतः" इति ब्रह्मपुराणवचनाद् बहुवचनरहितात् प्रथमः पक्षो ज्यायानिति अमन्त्रकतर्पणे। समन्त्रकेऽपि मातामहादितर्पणे प्रत्यञ्जलि तु न वाक्यम्, सकृदेवाञ्जलित्रयदानसिद्धेरावृत्तौ बीजाभावात्।

ननु द्वितीयतृतीयाञ्जल्योर्भविष्यत्तया नेदमादिपदनिर्देशः, न वा स्वधाशब्देन त्यागः, तथा हि उद्धृतोदकेऽञ्जल्यसिद्धेः। अनुद्धृतोदके चानुपात्ततयोपादानिकस्वत्वस्याप्यसिद्धेरिति चेत्, मैवम्; न हि द्रव्यवत्तयाधिकारः, किन्तु द्रव्ययोग्यतयैव भविष्यन्तीनामपि समिधान्त्यागः, अत एव च पूरकपिण्डेषु बहूनां तिलतोयाञ्जलीनां सकृदेव दानम्। इदमस्तु, बीद्धसन्निधिना मानसप्रत्यक्षी-भावेनाप्युपपत्तेः, व्यवहितस्यापि च फलस्य धात्वर्थतावच्छेदकत्वाभ्युपगमात्। चान्द्रोऽप्येवमिति साम्प्रदायिकाः, तदेतदयुक्तम्; क्रमिकयोरञ्जल्योर्युगपत्प्रत्यक्षाभावात्, तत्रैव चेदमः प्रयोगात्। पाणिद्वयस्थितजलावयविद्वयस्यैकदा असम्भवात्। अञ्जलेरलब्धात्मकत्वेनानुशासनविरोधादञ्जली इति चायुक्तम्। किं च लब्धात्मकं हि स्वं त्यज्यते, न त्वलब्धात्मकम्। हन्त तर्पणेऽञ्जलित्रयदान-वदधिवासनरात्रौ हविस्त्यागवदधिकारोऽस्त्विति चेदस्यापि पक्षसमत्वादव्यवहितस्यैव फलस्य धात्वर्थतावच्छेदकत्वात्। तस्मादुक्तदोषैः संवलितत्यागासम्भवादेकदा दश न त्यजन्ते, किन्तु क्रमेण त्यक्ता दश भवन्तीति। एतत् सर्वमभिसन्धाय वर्द्धमानोपाध्यायाः प्रत्यञ्जलित्यागवाक्य-माहुरिति।

नमो व इत्युक्त्वा मातामहाचार्यशिष्यर्त्विग्ज्ञातिबान्धवा अतर्पिता देहाद्रुधिरं पिबन्ति इत्यविशेषश्रुतत्वेऽपि मातामहानामेव मन्त्रान्वयोऽत्र च न प्रतिपुरुषं मन्त्रावृत्तिर्बीजाभावादिति केचित्, तन्न; करणत्वभङ्गापत्तेरिति।

## अथ देवपूजा

सा तु नित्या कालिकापुराणे—

शिवं भास्करमग्निञ्च केशवं कौशिकीमपि।
मनसाऽनर्चयन् याति ब्रह्मलोकादधोगतिम्॥

अत्रापि भिन्नक्रमः, तेन पुष्पाद्यभावे मनसाप्येते पूज्याः। 'ओषधीनामभावे तु भक्त्या भवति पूजितः' इति स्मरणात्। न तु मनसाप्यनादरो विधेय इत्यर्थः।

वरं प्राणपरित्यागः शिरसो वापि कर्तनम्।
न त्वसंपूज्य भुञ्जीत केशवं कौशिकीं शिवम्॥
अपूज्य प्रथमं सूर्यमपरान् यः प्रपूजयेत्।
न तद्भूतकृतं कर्म संप्रयच्छन्ति देवताः॥

इत्यादिवचनविरोधात्। अत एव प्रथमं सूर्यस्य सर्वशेषे विष्णोः पूजनम्, तस्यैव ब्राह्मणेषु देवत्वात्। इष्टदेवतापूजापि नित्यैव 'ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम्' इति विष्णुपुराणात्।

स्वर्गापवर्गसंसिद्धिर्दुर्गायागात् प्रजायते।

तथा—

यस्तु पूजयते नित्यं शिवं त्रिभुवनेश्वरम्।
स स्वर्गराज्यमोक्षाणां क्षिप्रं भवति भाजनम्॥

तस्मात् सौम्यमना भूत्वा यावज्जीवप्रतिज्ञया ।
अर्चयेत् तु सदा देवं पितरञ्च महामुने ॥

इति वचनात् ।

यच्चाग्न्यादिपूजाया अकरणे निन्दार्थवादः स तदिष्टदेवतात्वपक्षे नित्यतया तदकरणे द्रष्टव्यः । न चाकरणेऽनिष्टश्रवणात् करणे फलश्रवणाच्च नित्यकाम्यमिति जोविफलकामस्य नित्याधिकार इति वाच्यम्, नित्यकाम्यापूर्वयोर्द्वारफलयोरभिन्ने तन्त्रासंभवादावृत्तौ च वाक्यभेदापत्तेरिति प्राञ्चः । नित्यानामपि सफलत्वादपूर्वस्यावाच्यत्वाच्च संवलिताधिकार एव पञ्चदेवतापूजन इति तत्त्वम् । अत्र च शिवपूजा सर्वदा उदङ्मुखेन कार्या ।

शङ्कराराधनं तद्वत् सदा कुर्यादुदङ्मुखः ।

इति वचनात् । पूजान्तरन्तु प्रातः प्राङ्मुखेन रात्रौ चोदङ्मुखेन । पञ्चदेवतापूजायां तु प्रथमोऽग्निः, सूर्यपूजा तु नास्त्येवेति वदन्ति । अत्र पूजायां सर्ववर्णानामधिकारः—

आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥

इति विष्णुपुराणात् । अत एव शूद्राणां भगवत्पूजने शिवार्चने वा नाधिकार इति प्राच्यानां भ्रमो हेयः, किन्तु

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम् ॥

इति वचनात् ।

शिवपूजने ब्राह्मणस्य स्वधर्मत्यागिनोऽप्यधिकारः—

शूद्रकर्मरतेनापि स्पृश्यमानो द्विजन्मना ।
हृष्यामि तेन सुतरां पूज्यमानश्च सुन्दरि ॥

इति वचनात् ।

ब्राह्मणातिरिक्तस्य स्वधर्मत्यागिनो नाधिकारः—

स्वधर्मं यः परित्यज्य परधर्मरुचिर्भवेत् ।
तेनाहं पूज्यमानोऽपि गन्धं जिघ्रामि कौणपम् ॥

इति श्रुतेरिति प्राहुः ।

याचितं निष्फलं पुष्पं क्रयक्रीतं च निष्फलम् ।

इत्यन्यारामभवानि पुष्पाणि निष्फलानि ।

पारक्यारामजातैस्तु कुसुमैरर्चयेत् सुरान् ।
तेन पापेन लिप्येऽहम्.................... ॥

इति निन्दाश्रुतेः ।

नित्यपूजायां तु पुष्पस्य चौर्यमप्यदोषः—

देवतार्थं तु कुसुममस्तेयं मनुरब्रवीत् ।

इति वचनात् ।

तुलसीपत्रविल्वपत्रजलजानां पर्युषितत्वं नास्तीति प्रवादः ।

सर्वं पर्युषितं त्याज्यं पत्रं पुष्पं फलं जलम् ।
अत्याज्यं जाह्नवीतोयमत्याज्यं तुलसीदलम् ॥

इति सोढदेववाक्यं तुलसीप्राशस्त्यं केचिन्मानमाहुः । पर्युषितेष्वपि मालाकारगृहस्थितेषु न दोष इति शैवागमः ।

स्नानं कृत्वा तु ये केचित् पुष्पं चिन्वन्ति वै द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत् ॥

इदन्त्वहःस्नानविषयम् । प्रातःस्नानानन्तरं दक्षेण तदाहरणविधानात् । तदपि समानाधिकरणं 'क्त्वा' श्रुतेराग्नेयींन्यायाच्च । अभिवाद्याभिवादनकालेऽभिवाद्याभिवादकान्यतरकरस्थं कुसुमं दुष्टम् । अग्रभागत्यागात् प्रोक्षणाच्च तत्कर्मण्यं भवतीति केचित् । देवोपरि धृतं मस्तकोपरि च धृतमन्तर्जलक्षालितमधोवस्त्रधृतं च पुष्पं हरिभक्तिसंज्ञके ग्रन्थे निषिद्धतया गणितमिति ।

मुकुराणि कदम्बानि रात्रौ देयानि भानवे ।
दिवा शेषाणि पुष्पाणि दिवा रात्रौ च मल्लिका ॥

दिवात्रोटितान्यपि रात्रौ भानवे देयानि, न तु खण्डनीयानीत्यर्थः, पूजाप्रकरणे स्नानविरोधात् ।

कुब्जकं तगरञ्चैव कर्णिकारः कुरुण्टकः ।

तत्र तगरः सूर्यपूजने पिण्डीतगरः ।

शिवे विवर्जयेत् कुन्दमुन्मत्तं च हरेस्तथा ।
देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा ॥

इति शातातपीयो निषेधो वनतगरीविषयः । तुल्यविषयौ विधिनिषेधाविति केचित्, तन्न; विषयभेदसंभवात् । दुर्गापूजने तु—

बकुलैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः ।

इति श्रुतेर्देवीनामर्कमन्दाराविति वचने देवीपदं दुर्गेतरदेवीपरम्, सामान्यविशेषन्यायात् ।

केतकीं चातिमुक्तं च कुन्दो यूथी मदन्तिका ।
शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥

कुन्दं तु वर्षव्यापिशिवपूजायां व्रतरूपायां माघमासे विहितम्, 'माघे तु कुन्दकुसुमम्' इति स्मरणात् । अन्यथा तु माघेऽपि शिवे निषिद्धमेवेति ।

कनकानि कदम्बानि रात्रौ देयानि शम्भवे ।

'देयानि खण्डनीयानि' इति सागरः, तन्न; पूजाप्रकरणे स्नानविरोधात् । किं च रात्राववचितस्य तदुत्तरमह्नि विनियोगे पर्युषिततया बाधसापेक्षविध्यापत्तेः । 'सुरभीणि तथान्यानि वर्जयित्वा तु केतकीम्' इति वामनपुराणात् ।

केतकीपत्रपुष्पञ्च भृगुराजस्य पत्रकम्।
तुलसी कृष्णतुलसी सद्यस्तुष्टिकरी हरेः॥

इति श्रुतेः। केतकीपुष्पं विहितनिषिद्धमिति केचित्, निषेधो नरसिंहेतरविषयकः, नरसिंहपुराणीयत्वेन विधेर्नरसिंहविषयकत्वमिति चण्डेश्वरः।

पारिभद्रं पाटला च बकुलं गिरिशालिनी।
तिलकं जम्बुवनकं जावकं तगरं त्वपि॥
एतानि हि प्रशस्तानि कुसुमान्यच्युतार्चने।

गिरिशालिनी अपराजिता, जम्बूवनजं श्वेतजवाकुसुममिति। देवपूजा च दक्षिणहस्तेनैव

दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः।

इति परिशिष्टवचनात्।

एवञ्चाञ्जलिपूजने यदि शिष्टाचारोऽपि, तथापि स न प्रमाणम्, तदभावे शिष्टाचार इति श्रुतेः। यदपि 'यौ तत्पूजाकरौ कराविति' तदपि यदि समूलं तदापि परिचर्या परमेवेति।

## अथ पञ्च महायज्ञाः

तत्र वैश्वदेवहोमो देवयज्ञः, पितृबलिव्यतिरिक्तबलयो भूतयज्ञः, स्वाध्यायो ब्रह्मयज्ञः, कव्यबालादितर्पणं पितृबलिर्नित्यश्राद्धं च पितृयज्ञः, मनुष्याणामन्नदानं मनुष्ययज्ञः। वैश्वदेवबलिषु विभक्तस्य जीवत्पितृकस्याप्यधिकारः। कव्यबालादितर्पणे त्वविभक्तजीवत्पितृकस्याप्यधिकारः। एवं ब्राह्मणाय भिक्षादाने तु ब्रह्मयज्ञे ब्राह्मणानामेवाधिकारः। नित्यश्राद्धे प्रमीतपितृकाणामविभक्तानां मध्ये ज्येष्ठस्यैवाधिकारः "विभक्तानां तु सर्वेषाम्" इति वचनात्।

देवभूतपितृब्रह्ममनुष्याणामिह क्रमात्।
महासत्राणि जानीयात्त एव हि महामखाः॥

इति कर्मप्रदीपः। तत्राद्यो देवयज्ञः, ततो भूतयज्ञः, ततः पितृयज्ञः श्राद्धरूपः, ततो मनुष्ययज्ञ इति छन्दोगाह्निके। याज्ञवल्क्यः—

देवेभ्यश्च कृतादन्नाच्छेषाद् भूतबलिं हरेत्।

शातातपः—

भूतयज्ञस्तथा श्राद्धं नित्यं चातिथिपूजनम्।
क्रमेणानेन कर्त्तव्यम् ··· ··· ··· ··· ··· ···॥

इति छन्दोगाह्निके व्यक्तम्। रात्रौ तु पाकपक्षे न तदा वैश्वदेवबलिकर्मणी; किन्तु तदन्नसंस्कारमेव। दिवातनं तु पञ्चयज्ञान्तर्गतं नित्यं तत्र फलश्रुतिस्तुतिः। यदा च नित्यश्राद्धकरणम्, तदा तत्प्रागेव वैश्वदेवबलिकर्मणी कर्त्तव्ये। यदा तु पार्वणमेकोद्दिष्टं वा, तदा पार्वणानन्तरं वैश्वदेवबलिकर्मणी। एकोद्दिष्टानन्तरं तु वैश्वदेवबलिनित्यश्राद्धं तदानीमिति विशेषः। शूद्रेणापि सिद्धान्नैर्वैश्वदेवबलिकर्मणी कर्त्तव्ये।

दानं दद्याच्च शूद्रोऽपि पाकयज्ञैर्यजेत च ।

इति विष्णुपुराणात् ।

भार्यारतिः शुचिर्भृत्यो भर्ता श्राद्धक्रियारतः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥

इति याज्ञवल्क्यवचनाच्च पञ्चयज्ञाधिकारस्य स्फुटमेवावगमात् । न च 'पक्वमुच्छिष्टमुच्यते' इत्यादिविरोधः, विशेषश्रुतेः । अत एवाचारविरोधोऽपि परास्तः, अकिञ्चित्करत्वात् ।

वैश्वदेवं च कुर्वीत स्वशाखाविहितं च यत् ।
संस्कृतान्नैर्हविष्यैश्च हविष्यव्यञ्जनान्वितैः ॥
तैरेवान्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा ।
कृतापसव्यः स्वधया सर्वं दक्षिणतो हरेत् ॥ इति ।

वैश्वदेवाधिकारिणा तु सिद्धान्नं वैश्वदेवानन्तरपूजापक्षे देयम्, न तु प्रागपि; पाकादग्रमुद्धृत्येति वाक्येन पाकाग्रस्यैव वैश्वदेवहोमे विनियोगविधानात् । श्राद्धादौ चागत्या शेषान्नेनापि वैश्वदेवहोम इति ।

नित्यश्राद्धं कृत्वा नित्यदेवपूजादि न कार्यम्, 'श्रद्धान्तानि कर्माणि' इति पल्लवः । साम्प्रदायिकास्तु नित्य एव क्रमश्रुतेः काम्यं तु कार्यमेवेति । अत एव नित्यश्राद्धानन्तरमपि निर्विचिकित्सं शिष्टानां पुष्करिण्युत्सर्ग इति । पञ्चयज्ञानां चाशक्तौ स्नात्वा तर्पणं ब्रह्मयज्ञमात्रमपि कार्यम् । 'नित्यं स्वाध्यायः पितृभ्यश्चोदकदानं यथोत्साहमन्यत्' इति गौतमवचनात् ।

मनुरपि—

यदेव तर्पयेदद्भिः पितॄन्स्नात्वा द्विजोत्तमः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥ इति ।

दिशाञ्चेति श्रवणाद् दिग्भ्यो नम इत्येव बलिचतुष्टयमिति वासुदेवः, तन्न; अमुष्मै नम इतिवदस्य संग्राहकत्वात्, चकारश्रुतेश्च, प्राच्यै दिशे स्वाहेति श्रुत्या तेनैव रूपेण देवतात्वनिर्णयादत एव प्राच्यै नम इति परास्तम् । अपाच्यै नम इति मुख्यम्, अवाच्यै नम इति केचित्, मध्ये ब्रह्मणेऽन्तरिक्षाय सूर्याय चेति बलित्रयं प्राक्संस्थमेव यथाक्रममिति श्रुतेः । तत एषामुत्तरतो विश्वेभ्यो देवेभ्यो विश्वेभ्यो भूतेभ्य इति बलिद्वयं प्राक्संस्थमेव । ततोऽनयोरुत्तरतः प्राक्संस्थमेव, उषसे भूतानां पतय इति बलिद्वयमिति । एषामुत्तरत उषसे भूतानाम्पतय इति श्रुतेरिति कर्कः । यद्युत्तरचतुष्कस्य ब्रह्मादित्रिकोत्तरत्वं विवक्ष्येत, तदा सूर्यायेत्यनन्तरमेवोत्तरत इति विदधीत, न तु भूतेभ्य इत्यनन्तरम्, अतो विद्मो यद् ब्रह्माद्युत्तरत्वं द्वयोस्तदुत्तरत्वं च शेषयोस्तेषामिति चादौ ब्रह्मादिपरम्, ततस्तयोरिति परिणतं सद्विश्वदेवादिद्वयपरम्, अन्यथाऽन्वयादिति । ननु—

ब्रह्मणे चान्तरिक्षाय सूर्याय च यथाक्रमम् ।
विश्वेभ्यश्चैव देवेभ्यो विश्वभूतेभ्य एव च ॥
उषसे भूतपतये दद्याच्चोत्तरतस्ततः । इति ।

श्रुतेश्चतुर्णामविशेषण ब्रह्मादिबलित्रिकोत्तरत्वमिति व्याख्यानेनाप्युत्तरत्वाक्षतेरनासत्तेश्चाप्रतीकार्यत्वादिति कर्काशयः। श्रीदत्ताह्निके तु चतुष्टयमुत्तरोत्तरं विभक्तिविपरिणामापेक्षया व्यवहितान्वयस्यैव लाघवेनाश्रयणात्। एवञ्च ब्रह्मादित्रिकोत्तरं प्राक्संस्थमेव बलित्रयदानं सर्वथैव चिन्त्यमिति। भारते—

घासमुष्टिं परगवे सान्नं दद्यात्तु यः सदा।
अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति॥
सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः।
परिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः॥
दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि।

इति श्रवणात् संवलिताधिकार इति बहवः, तन्न; अकरणेऽनिष्टाश्रुतेः। द्वितीये तु मन्त्रविधिरेवायम्, न तु कालविधिरपि; वाक्यभेदापत्तेः, मूलान्तरकल्पनापत्तेः, विधेयगौरवापत्तेश्च। तस्मात् सदेत्यनुवाद इति।

भक्ष्या अपि मत्स्याः श्राद्धशेषाः सन्त एव खाद्याः। तथा हि मनुः—

पाठीनरोहितावाद्यौ प्रशस्तौ हव्यकव्ययोः।
राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः॥

तथा—

मधुपर्के च सोमे च पितृदैवतकर्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥

तथा—

यावन्ति पशुलोमानि तावत् कृत्वेह मारणम्।
वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि॥

अत्र च निषेधविध्योः श्रवणाद्विकल्प एव। तत्रापि व्यवस्थित इति द्रष्टव्यम्।

यस्तु खादति मांसानि ब्राह्मणो वेदवित्तथा।
स पच्यते निरालम्बे नरके तेन कर्मणा॥

इति श्रुतेर्ब्राह्मणस्य मांसभक्षणनिषेधे सिद्धे—

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।

इत्यादिवचनाद् द्विजपुरस्कारेणापि यत् सविधिमांसभक्षणं तदपि क्षत्रियादिपरमेव, सामान्यविशेषन्यायादिति केचित्, तन्न;

असंस्कृतान् पशून मन्त्रैर्नाद्याद् विप्रः कथञ्चन।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः॥

इत्यादिमनुवचनेन ब्राह्मणस्य सविधिमांसभक्षणविधानात्। तस्मात् प्रतिषेधवचनान्यभक्षणपराणीति। तथा च चातुर्वर्णस्यैव भक्षणे प्रवृत्तेर्निषेधेऽपि चतुर्णामधिकारः। प्रवृत्तिमतो निवृत्तिनियोगाधिकारादिति।

संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ।

इत्यादिना दक्षेण पञ्चमकाले भोजनमुक्तम्, तथापि तददृष्टार्थं तेनानिषिद्धकाले वैधं कर्मकृत्वा प्रातरपि भोक्तव्यमेव । अत एव

सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ।

इत्यपि घटत इति ।

अङ्गुल्या दन्तकाष्ठं च प्रत्यक्षलवणं तथा ।
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणाद् ॥

अत्रावतारणानन्तरं प्रक्षिप्तं यत्तत्प्रत्यक्षलवणम् । केचित्तु दत्तं सद् यद् दृश्यते तत्प्रत्यक्ष-लवणम् । एतादृशमपि सैन्धवं सामुद्रकं चानिषिद्धमेव ।

सैन्धवं लवणं तद्वत्तथा सागरसंभवम् ।
पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यशः ॥

इति वचनादित्याहुः ।

शूद्रेण कापिलं पयः सर्वथा न पेयम् ।

कापिलं यः पिबेच्छूद्रो नरके स विपच्यते ॥

इति भविष्यात् ।

पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा ।

इति वचनात् कस्तूर्यपि न भक्ष्येति द्रष्टव्यम् । ताम्बूलोपकरणत्वेन तु कस्तूर्यपि देयेति पल्लवलिखनं तु चिन्त्यमिति ।

शातातपः—

ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् ।
अन्यदा तु सदा कार्यं शौचं मूत्रपुरीषवत् ॥
द्वावेतावशुची स्यातां दंपती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

अत्यन्तलेपे मूत्रवदिति व्यवस्थितो विकल्पः । शुचिरिति स्नानं विनैव, न तु मृज्जल-क्षालनाचमनाभावे, तस्य मलसंबन्धोपाधिप्रयुक्तस्य न्यायप्राप्तत्वेन मैथुनानन्तरमनिवार्यत्वात् ।

गोतमः—

'न मिथुनीभूय शौचं प्रतिलम्बेत' तथा च मैथुनानन्तरमेव यथोक्तजलक्षालनानन्तरमृतौ पुंसो रजन्यामेव नैमित्तिकं स्नानमपि । 'नैमित्तिकानि' इत्यादिदक्षवचनात् । वृद्धास्तु गौतमवचनेन शौचाचमनक्षालनमात्रम् । ऋतुगमने स्नानं तु कर्माधिकारापादकम्, न तु चाण्डालादिस्पर्शवद् ऋतुगमनादप्रयत्यं भवति तद् स्नानम् , न तु रात्रौ, किन्तु प्रातरेवेत्याहुः, श्रुतवाक्यभङ्गापत्तेरिति ।

पंक्तिभेद—मांसानि न भक्षयेयुराप्रदानादिति गोतमः ।

अस्यार्थः—

प्रदानपर्यन्तं पुत्रैः सपिण्डैर्वा मत्स्यादिभक्षणं न कार्यम् । अत्र च प्रदानेन प्रदानसमयो लक्ष्यते । अन्यथाऽलाभादिना तददाने भक्षणानापत्तिः,अत एव सद्यः शौचेऽप्यशौचान्तद्वितीयाह एव तद्भक्षणमिति केचित्, तन्न; अशौचव्यपगम इति विष्णुवचनेन सद्यः शौचेऽपि तदहरेवाद्यश्राद्धे मांसादिभक्षणं तद्दिनेऽपि निष्प्रत्यूहमिति ।

शरदि शुक्लपक्षे षष्ठिकाभिः पार्वणं निरग्नीनामपि नित्यम् । 'व्रीहियवपाकौ च'इत्यन्तमभिधाय 'एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः' इत्यनेन विष्णुना तन्नित्यत्वाभिधानात्, इदं च 'व्रीहिभिर्गृहमेधी शरद्वसन्तयोर्व्रीहियवाभ्यां यजेत'इति वचनात् ।

शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् ।
गच्छेत् क्षेत्री विधानेन गीतवाद्यपुरःसरः ॥
तेन देवान् पितृँश्चैव तर्पयेदर्चयेत् तथा ।
प्राश्नीयाद् दधिसंयुक्तं नवं विप्रानुमोदितम् ॥

इत्यादिना शरच्छुक्लपक्षमुपक्रम्य ब्रह्मपुराणकथनात् । इदं च नवव्रीहीणामभावे पुराणैरपि तदभावे प्रतिनिधिना शाल्यादिनापि कार्यमिति केचित्, तदुभयमपि मन्दम्; एवं धान्यमित्युपक्रम्य तेनेत्युपसंहारात् । यवपाके श्राद्धं च वसन्ते, तदपि नित्यं 'व्रीहियवपाकौ च'इत्युपक्रम्य विष्णुना तन्नित्यत्वाभिधानात् । इदं च वसन्तेऽपि न चैत्रे, न वा कृष्णपक्षे कार्यम्—

पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद् बुधः ।
भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते ॥

इति भोजराजलिखितवचनात् । एतच्च वैशाखशुक्लपक्ष एव कार्यम्, 'शरदि वसन्ते च इति वसन्तनियमात्, वसन्तव्यतिरिक्ते प्रापकाभावात् । इदं च वैशाखशुक्लपक्षे मलमासेऽपि कार्यम् ।

नित्यनैमित्तिके कुर्यात् प्रयतस्सन् मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च ॥

इति प्रतिप्रसवात् 'गृहमेधीयशरद्वसन्तयोर्व्रीहियवाभ्यां यजेत' इति विष्णुसूत्रात् । ऋतुनियमे श्रीपतिरत्नमालायाम्—

मृगादिराशिद्वयभानुयोगात् षडर्त्तवः स्युः शिशिरो वसन्तः ।
ग्रीष्मोऽथ वर्षाश्च ततः शरद्वै हेमन्तनामा कथितश्च षष्ठः ॥ इति ।

शिष्टाचाराच्चेति संप्रदायः । नव्यास्तु 'प्रेतश्राद्धं तथैव च' इति पृथगुपादानबलान्नित्यनैमित्तकयोरपि तद्दिनकर्त्तव्यताकयोरेव प्रतिप्रसवः, न तु सावकाशयोरपीति । अत एव "नेहैतात्र विशेषेज्या अन्यत्रावश्यकाद्विधेः" इत्यार्षसंक्षेपे यस्यैव तदानीमननुष्ठाने पापं तदेवावश्यकमिति तद्विवरणमपि संगच्छते । तथा च यवपाकश्राद्धं द्वितीयवैशाखशुक्लपक्ष एव कार्यम् । तस्मिंस्तु प्रकृते मासि कुर्यात् श्राद्धं यथाविधीति श्रुतेः । न च वसन्तबाधापत्तिः ।

पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ।
द्वौ द्वौ माघादिमासौ स्याद् ऋतुस्तैरयनं त्रिभिः ॥

इति शक्तिग्राहकाच्चान्द्रमासस्यैव तत्र प्रयोजकत्वात् ।

षष्ठया तु दिवसैर्मासः कथितो बादरायणैः ।

इत्यनेन तस्य षष्ठिदिवसात्मकस्य सत्त्वादित्याहुः । एवं हैमन्तिकसंस्कारमपि पार्वणमावश्यकम् ।

अकृताश्रयणं चैव धान्यजातं द्विजोत्तम ।
राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत् ॥

इति वराहपुराणवचनेनाकृतनवान्नश्राद्धानां शस्यानामकर्मण्यत्वप्रतिपादनात् । आश्रयणमिह नवेन शाल्यादिना प्रथमागमननिमित्तकं श्राद्धं विवक्षितम्, न त्वाश्रयणेष्टिः, पारिजातादिव्याख्यानसंवादात् ।

श्यामाकैरिक्षुभिश्चैव पितॄणां सार्वकालिकम् ।
कुर्यादाश्रयणं यस्तु स शीघ्रं फलमाप्नुयात् ॥

इत्यादिवचनाच्च । किञ्चाश्रयणेष्टिपरत्वे राजमाषानणूनित्यत्रोत्तरार्द्धे वाक्यभेदापत्तेरिति । इदं 'श्राद्धं न नन्दायाम्, न हरिशयने, न धनुस्थे रवौ, नापि तुलस्थे, न च कृष्णपक्षे ।'

नवान्नं नैव नन्दायां नापि सुप्ते जनार्दने ।
न कृष्णपक्षे धनुषि तुलायां नैव कारयेत् ॥

इति ज्यौतिषवचनात् । इदं च वृश्चिकत्रयोदशांशमध्ये कार्यम्—

वृश्चिके पूर्वभागे तु नवान्नं शस्यते बुधैः ।
उत्तरे क्रियमाणं तु धनुष्येव कृतं भवत् ॥
धनुषि यत् क्रियते श्राद्धं मृगनेत्रासु रात्रिषु ।
पितरस्तन्न गृह्णन्ति नवान्नामिषगर्द्धिनः ॥

इति वचनात् ।

अत्र 'वृश्चिके शुक्लपक्षेतु' इति लिपिप्रमादः । यद्यप्यपरभागे कृतं श्राद्धं फलतो धनुषि कृतत्वान्निरर्थकम्, अतः पञ्चदशदिनानन्तरं धनुरतिदेश इत्यापाततः प्रतीयते, तथापि पूर्वभागपदस्य सायनवृश्चिकरविस्थदिनतया वृश्चिकत्रयोदशांशपरतैव, त्रयोदशांशानन्तरमेव सायनधनुस्थरविसंबन्धात् । साम्प्रतं रवेरयनांशक्रमेणाग्रिममेषादिद्वादशराशौ फलदातृत्वात् । अत एव ज्योतिस्सारसमुच्चये—

वृश्चिकस्थे रवौ त्यक्त्वा वासराणि त्रयोदश ।
नवान्नैर्विहितं श्राद्धं धनुष्येव कृतं भवेत् ॥

इति कण्ठतोऽप्युक्तम् । न चैतानि कृष्णपक्षनिषेधवचनानि शारदनवान्नपराण्येव स्युरेकवाक्यतानुरोधात्, चैत्रे पोषे इत्यादिप्रत्येकनिषेधादिति चेत्, उच्यते—अनयोर्वैषम्ये मूलयोरपि वैषम्यस्य वज्रलेपायितत्वात्, मूलमूलिनोरेकवाक्यतानियमात् । अत एव—

न जीर्णमलवद्वासाः स्नातकः स्याद् द्विजोत्तमः ।

इत्यत्र सुवाससा भवितव्यमिति श्रुतिः, न मूलमिति सकलतन्त्रसिद्धान्तः । तस्माद् ब्रह्मपुराणवचनं शुक्लपक्षविधायकमेव, ज्यौतिषवचनानि तु सामान्यतः कृष्णपक्षनिषेधकान्येवेति तत्त्वम् ।

यद्यपि परमगुरुचरणैस्तत्त्वालोके लाघवात् पर्युदासलक्षणया द्वयोरेकत्रान्वयतापि स्वीकृता, तथापि प्रकृते कृष्णपक्षे 'न नवान्नं कुर्वीत' इति लाघवात् पर्युदासे सिद्धं न समोहितमिति प्रत्येकनिषेधे वाक्यभेदापत्तिः । न नन्दायामिति सामान्यनिषेधाच्च । ननु कथं तर्हि 'न प्रसुप्ते जनार्दने' इति विशेषनिषेधः ? अन्यथानुपपत्तेरिति गृहाण । अत एव **कामधेनुकृता**—

कृष्णपक्षे नवान्नं तु न कुर्यान्मानवो यतः ।
पितरस्तन्न गृह्णन्ति दाता च नरकं व्रजेत् ॥

इति वचनात् सामान्यनिषेधोऽयमिति कण्ठरवेणोक्तम् । वृश्चिकशुक्लपक्षे तदकरणे माघेऽपि कार्यमावश्यकत्वात्, 'अनिषेधाच्च शस्यते' इत्यभिधानाच्च । यत्तु प्रकृतवचनं व्रीहिपाकश्राद्ध एव गौणकालविधायकं लाघवादिति तन्न, अस्य गौणकालविधायकत्वे 'शस्यते' इत्यस्य वैयर्थ्यापत्तेः । सर्वाणि च सावकाशश्राद्धानि नन्दादौ न कार्याणि, 'नन्दायां भार्गवदिने' इत्यादिवचनात् । विवाहादौ च प्रधानाधिकारिण एवांगाधिकारान्नानुपपत्तिः । न च इज्यावत् श्राद्धबाध एवास्तु, निषेधसंकोचस्यावश्यकत्वादिति । एवं पित्राश्रयणे ह्यकृते तदेकपाकेन वसतां पुत्राणामपि हैमन्तिकशस्यमकर्मण्यमेव, असंस्कृतत्वादिति ।

सर्वत्र श्राद्धे दक्षिणामुखेन पादप्रक्षालनं कार्यम्, आचमनं तु प्रकृतक्रमेणैव ।

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः ।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥

इति देवलेनाचमनं वदता विशिष्याभिधानात् । एतत्सर्वमभिसन्धाय **तरंगिण्याम्**— 'दक्षिणाभिमुखः पादौ प्रक्षाल्य प्राङ्मुख उदङ्मुखो वा ऐशान्याभिमुखो वाचमेत्' इति सिद्धवल्लिखितम् ।

भूगतवामजानुना पित्र्यं कर्म कार्यम्—

भूमौ कृत्वा तथा जानुं सव्यं पितृपरायणः ।

इति श्राद्धपारिजातलिखितवचनात् । प्रोक्षणमभिधाय एतदनन्तरं तु काम्ये काम्याभिलापपूर्वकः संकल्पः, नित्ये तु शिष्टाचारपरिप्राप्तः संकल्प एव **निर्णयकृता** लिखितः । तत्र क्रमोऽप्यभिमत एव, अत एव आचारोऽप्येवमेवेति । सेकसंकल्पयोर्यादृच्छिकः क्रम इति प्राञ्चः । **कामधेनुकृता** तु गायत्रीजपानन्तरमासादनात् प्राक् प्रोक्षणं लिखितम् । तत्र च तस्यायमाशयः 'नाप्रोक्षितं दद्यात्' इति श्रुतेर्दानात्प्रागेव प्रोक्षणमायातीति । **वायुपुराणे**—

उपविश्य जपेद्धीमान् गायत्रीं तदनुज्ञया । इति ।

अत्र यद्यपि संख्यानियमो न श्रूयते, तथापि भोजनस्थले त्रिः सकृद्वेति कात्यायनसूत्रादेकत्र निर्णीत इति न्यायात् शिष्टाचाराच्च त्रिर्जपोऽविरुद्ध एव । ये तु प्रणवव्याहृतिरहितां गायत्रीं वायुपुराणानुरोधादिह जपन्ति ते भ्रान्ताः । तथाहि—

प्रणवं पूर्वमुच्चार्य भूर्भुवः स्वस्ततः परम् ।
गायत्री प्रणवश्चान्ते जप्ये ह्येष विधिः स्मृतः ॥

इति परिभाषारूपयाज्ञवल्क्यवाक्येन गायत्रीजपे सर्वत्र प्रणवव्याहृतिपूर्वकताया वज्रलेपायितत्वादिति । न च 'अश्नस्तु जपेद् व्याहृतिपूर्वां गायत्रीम्' इति कात्यायनसूत्रे विशेषोपदेशादन्यत्र तयोरसाहित्यमिति वाच्यम्, वाक्ययोर्भिन्नकर्त्तृकत्वात् । एकवक्तृके विशेषोपदेशानर्थक्ये तथा कल्प्यते । ननु परिभाषाप्राप्ते कथमुपदेशः ? प्रतिपत्तिलाघवस्य कृतोपदेशस्य पर्यनुयोगानर्हत्वादिति ।

ब्रह्मपुराणे—

परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जडः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥
अग्रभागं ततस्तेभ्यो दद्यान्मूलं च जीवताम् । इति ।

अत्र पितृपदमजहत्स्वार्थलक्षणया प्रमीतमात्रपरम्, तेन मातृश्राद्धादिसंग्रहः । न च निर्बीजलक्षणापत्तिः, आकाङ्क्षयाः सर्वत्र तुल्यत्वाग्निर्विचिकित्ससकलशिष्टाचाराच्चेति न किञ्चिदेतत् । 'तेभ्यः' तत्स्वामिपितृभ्यः । तेन परस्वत्वास्पदे स्थाने सङ्कल्पादनुपदमेव जीवते तत्स्वामिने किञ्चित्ताम्बूलादिकं तत्पितृभ्यस्तु श्राद्धीयद्रव्याग्रभागं दद्यात् । इदं नैमित्तिकं पितृरीत्या पित्र्यत्वात् । अत एव सव्येनैवेतद् दानमिति प्रदीपोक्तमपास्तम् । अत एव नैमित्तिकत्वेन वृद्धिश्राद्धेऽप्यपसव्येनैव तद्दानम् । न च—

नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।
पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ॥

इति कात्यायनविरोधान्नैवमिति वाच्यम् । अनेनापि हि वृद्धिश्राद्ध एव तन्निषेधः, न तु नैमित्तिके कर्मण्यपीति । अस्तु तर्हि हविस्त्यागस्य श्राद्धत्वेन परिवेषणात् प्रागेव तद्दानमुचितमिति चेद् भ्रान्तोऽसि, अनङ्गव्यवायापत्तेः । प्रधानाधिकाराद् गायत्रीजपादावपि श्राद्धांगे अनधिकारापत्तेः । प्रधानाधिकारिण एवाधिकारात् । न च तदानीं दानेऽप्यनङ्गव्यवायः, संकल्पस्याङ्गत्वाभावात् ।

उपविश्य जपेद्धीमान् गायत्रीं तदनुज्ञया ।

इति वचनाद् गायत्रीजपस्यैव श्राद्धप्रथमकर्मत्वात् । सेकस्य श्राद्धपूर्वसमयकर्तव्यत्वात् । एतच्च भूस्वाम्यन्नदानं नित्यश्राद्धेऽपि कार्यम् ।

अहन्यहनि यत् श्राद्धं तन्नित्यमिति कीर्त्तितम् ।
विश्वेदेवविहीनं तदशक्तावुदकेन तु ॥

इत्यादिभविष्यपुराणेन तस्यापि श्राद्धत्वसिद्धेरिति केचित्, तदसत्; इदं हि न श्राद्धत्वेन विहितम्, किन्तु महायज्ञान्तर्गतत्वेन । अत एव तर्पणेन बलिना नित्यश्राद्धेन यथाधिकारो विधीयते । तत्र च श्राद्धमन्यथा सिद्धं भविष्यति, समाप्तिजनकविघ्नसंसर्गाभावे मङ्गलजन्यविघ्नध्वंसवत् । अत एवात्र न श्राद्धधर्मा इति । त्यागवाक्ये तु 'नमःपदं दद्यात्'इत्याद्यनुरोधादस्य श्राद्धत्वाभावादिति सपिण्डितरःसन्देहान्नमःपदमिति तन्मन्दम्, नियतप्रयोगानुपपत्तेः । यन्मते पार्वणादौ संकल्पस्याङ्गत्वं तन्मते सङ्कल्पात् प्रागेव भूस्वाम्यन्नदानम्, अन्यथाऽनङ्गव्यवायः प्रतिहस्तकमतवदेव । यन्मते तु नाङ्गत्वं तन्मते सङ्कल्पानन्तरमपि तद्दानम्, गायत्रीजपस्यैव प्रथमकर्मत्वात् । अत एव कर्मप्रदीपे 'प्राग्वा, इति परमगुरवो लिखन्ति स्म ।

यत्र देशविशेषे य एव देवाः, गुणशून्या एव द्विजाः, अप्रतिष्ठितमेव पानीयम्, गौरान्यैव मृत्तिका तत्र च सर्वत्र तत्कर्मणि तान्येवादर्तव्यानीति ।

यस्मिन् देशे च ये देवा यस्मिन् देशे च ये द्विजाः ।
यस्मिन् देशे च यत्तोयं मृत्तिका यत्र यादृशी ॥

इति स्मृतेः । अर्घपात्रस्य करेणाच्छादनमित्याचारश्चिन्त्यः । देवार्घयोस्तूत्सर्गः, न च स्थापनचालने, अनभिधानादिति हन्तैवं मातामहादिपात्रेऽपि न स्यात् ।

प्रथमं पैतृकं पात्रं ततः पैतामहं न्यसेत् ।
प्रपितामहं ततो न्यस्य न स्पृशेन्न च चालयेत् ॥

इति विशेषाभिधानस्वरसादिति चेत्, भ्रान्तोऽसि ।

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।

इत्यतिदेशबलात्, तत्तदङ्गप्राप्तिस्तु विशेषवचनादिति । 'पितृभ्यः स्थानमसीति न्युब्जं पात्रम्' इत्यविशेषितकात्यायनश्रुतेस्तत्रापि तत्प्रतीतेश्च । ननु देवपूर्वश्राद्धमिति श्रुतेरत्रापि स्यादिति चेन्न, तत्पूर्वकत्वमात्रश्रुतेः । तत्तदङ्गप्राप्तिस्तु विशेषोपदेशबलादिति । 'अर्घदानम् एष ते अर्घः स्वधा' इत्यनेन, 'असावेष तेऽर्घः' इति कात्यानेन सूत्राणादिति । परिवेषणं तु दक्षिणहस्तेनैव, विशिष्यानभिधानात्

कर्मोपदिश्यते यत्र कर्तुरंगं न चोद्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

इति छन्दोपपरिशिष्टवचनात् । अत एव

श्राद्धे हवनकाले तु पाणिनैकेन निर्वपेत् ।
तर्पणे द्वितीयं कुर्यादेष एव विधिः सदा ॥

इत्यपि सङ्गच्छते । यत्तु 'अन्नोपनयो हस्ताभ्यामन्नदानं वामान्वारब्धदक्षिणकरेण, इति तरङ्गिणीलिखनम् ।

एकेन पाणिना दत्तं न कदाचन भक्षयेत् ।
घृततैलं च पानीयं लवणं गोरसं तथा ॥

इति वचनादिति तद्घृतादिविषयकमवगन्तव्यम् ।

युक्तं ह्युभाभ्यां पाणिभ्यां तदन्नं परिविष्यते ।
तद्विलुम्पन्ति असुराः सहसा दुष्टचेतसः ॥

युक्तं पाणिभ्यामसम्बन्धमिति व्याख्याय पाणिभ्यामेव परिवेषणमिच्छन्ति, तत्सर्वेरनादरणादमूलकमवगन्तव्यम् । किं च 'उभयोर्हस्तयोर्युक्तं यदन्नमुपनीयते । तद्विलुम्पन्ति असुराः' इति पाठस्यैव भृगुसंहितायां दर्शनादिति । श्राद्धे तुलसी पुष्पत्वेनैव देया, पुष्पप्रकरणे तत्पाठात् । वाजसनेयिनामन्नविकरणे 'अनग्निदग्धा' इति पाठः स्वशाखाम्नातत्वात् ।

ब्रह्मपुराणे—

ततः प्रक्षाल्य हस्तौ च तथाचम्य हरिं स्मरेत् ।
सव्याहृतीं सप्रणवां गायत्रीं च ततो जपेत् ॥
पठेन्मधुमतीः पुण्यास्तथा च मधुमध्विति ।

अयं च गायत्रीजपो मधुमतिजपश्च सव्येनैव, अपसव्ये मानाभावादिति भ्रान्ताः, तन्न;

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणिना ॥

इति वचनात् पित्र्यजपत्वेन प्राचीनावीतित्वसिद्धेरिति । एवं दक्षिणायामपि प्राचीनावीतीत्वमेव । ब्रह्मपुराणोक्तगायत्रीजपे देवताम्य इति जपे च सव्यविधिरेव, उपविश्य जपेदित्यादिना अपसव्यबाधात् । गायत्रीजपात् प्रागेव कुशोपवेशनमिति वृद्धास्तदसत्; 'पवित्रपाणिर्दर्भेष्वासीनो मधुवाता' इति ऋचमिति शङ्खवचनेन मधुवाता इति मन्त्रजप एव तद्विधानात् ।

मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः ॥

इति यथाश्रुतवाक्ये मधुमध्विति वाक्यस्यैव त्रिरभ्यास इति प्राच्यास्तन्न, तत्र प्रकृतौ पार्वणे मधुमध्वित्यादित्रिरभ्यस्तो यो जपः स इह विकृतौ मधुमन्त्रविवर्जितः कार्य इत्यस्यैव प्रकृतवाक्यार्थत्वात् ।

सपिण्डने तु संयोजनवदर्घपिण्डविभागयोरपि मन्त्रान्वयः । कात्यायनालिखनमात्रस्याकिञ्चित्करत्वेन 'ये समाना इति द्वाभ्यामाद्यं तु विभजेत् त्रिधा' इत्यनेन मन्त्रान्वयस्य दर्शितत्वात्, नानाशाखाप्रत्ययमेकं कर्मेति न्यायात् । श्रीदत्तनिबन्धे तदलिखनं तु कल्पसूत्रकारानुक्तत्वमात्रेण, कल्पसूत्रव्याख्यारूपत्वात् । ननु विभजेदित्यत्र संयोग एवार्थो विपूर्वकभजतेस्तत्रापि शक्तत्वादिति चेन्न; तत्र शक्तिग्राहकाभावात् । न च 'विभजन्ते न ये भूपा नालभन्ते च ते श्रियम्' इति 'बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम्' इत्यादिप्रयोग एव शक्तिग्राहक इति वाच्यम्, रूढिकाव्यकोदाहरणानुपपत्तेरिति ।

मत्स्यपुराणबोधितशय्यादिदानपञ्चकवाक्ये स्वर्गपदानन्तरं प्राप्तिपदं न देयम्, तस्य स्वर्गार्थकत्वे पौनरुक्त्यापत्तेः । तदन्यार्थकत्वे काम्यत्वाभावात् । प्राप्तिर्हि समवायलक्षणा सा चाकाम्या विश्वजिन्न्यायेनास्पृष्टा च, स हि न्यायः स्वर्गमात्रं स्पृशति । यथा हि विश्वजिता यजेतेत्यत्र विश्वजिद्यागस्य न नित्यत्वम्, तदकरणे दोषाश्रवणात् । अननुष्ठाने च विधेरप्रामाण्यापत्तिः । अतः काम्यत्वे अधिकारिलाभाय फलमिह कल्प्यते, तच्च, न तदनुष्ठातृपुरुषेच्छाविषयं पुत्रधनादि, अनन्ताधिकारिकगौरवात् । लाघवादेकाधिकारिकत्वमेव, तत्र सुखदुःखाभावयोर्निरुपाधीच्छाविषयत्वेन सकलानुष्ठातृपुरुषेच्छाविषयतया उभयोरपि प्रसक्तौ दुःखाभावस्य गुरुतया हेयत्वेन भावरूपत्वेन लाघवात् स्वर्गः फलं पर्यवस्यति 'सः स्यात् स्वर्गः, सर्वान् प्रत्यविशेषादि'ति । तत्राभिधानान्न तत्प्राप्तिरपीति । वृषोत्सर्गवाक्ये तु प्राप्तिपदं देयमेव प्रकृत्यनुरोधात् । तत्र च स्वर्गपदस्य सुरलोकार्थकत्वेन तत्सम्बन्धस्य निवासस्य संयोगरूपस्य काम्यत्वादिति ।

ब्रह्मपुराणे—

गृहीत्वा दर्भपिञ्जलीं ततो वामेन पाणिना ।
सव्येतराभ्यां पाणिभ्यां कुर्यादुल्लेखनादिकम् ॥

अत्र द्वन्द्वबलात्कराभ्यामेव रेखाकरणमिति केचित्, तन्न;

पिञ्जल्याद्यभिसंगृह्य दक्षिणेन करेण तु ।
अन्वारभ्य तु सव्येन कुर्यादुल्लेखनादिकम् ॥

इति कात्यायनवचनेनान्वारम्भप्रतीतेः । पाणिभ्यामेवेति तुल्यद्वारत्वेऽपि क्षौमे वसनावितिवत्, कात्यायनानुरोधात् । न चातद्गुणसंविज्ञानबहुव्रीहिः, तस्य जघन्यत्वात् । करप्रोञ्छनं तु पित्रादित्रिकपिण्डकुशेष्वेव, वृद्धप्रपितामहादीनामेव लेपभागित्वात् ।

लेपभागश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । इति ।

पिण्डद इति वचनात्तत्रापि दक्षिणकरस्यैव, "ततो दर्भेषु तं हस्तं निर्मृज्याल्लेपभागिनाम्" इति वचनात् ।

दर्भमूले करौ प्रोञ्छ्य त्रिरावृत्य हरिं स्मरेत् ।

इत्यत्रोभयत्ववचनस्याविवक्षितत्वात् । वस्तुतस्तूपक्रमस्थद्विवचनानुरोधेन गृहं सम्मार्ष्टीतिवदेकत्वमविवक्षितम्, वेदो वेति न्यायात् । अत एव द्विवचनोपबृंहितः प्रयोगोऽपि घटत इति । अत्र च शब्दप्रयोगो न कार्यं मानाभावात् । नीवीविस्रंसनं दक्षिणहस्तेनैवाङ्गानभिधानात्, 'कर्मोपदिश्यते यत्र कर्त्तुरङ्गं न चोच्यते' इत्युक्तवचनात् । पिण्डानामुत्थापनानन्तरमाघ्राणम् । "अवघायाजिघ्रति यजमान उल्मुकं सकृदछिन्नान्यग्नावाधत्ते" इति कात्यायनेनाभिधानात् । अवधाय उत्थाप्येति तदर्थात् । एवं च विपरीतक्रमो हेय इति । मत्स्यपुराणे—

अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनश्च तैः ।

एवं चात्र वारिधारा दानं भ्रममूलकमिति तत्त्वम् ।

कात्यायनः—

"नमो व इत्यञ्जलिं करोत्येतद्व इत्यपास्यति सूत्राणि प्रतिपिण्डमिति । एतद्वः पितरो वास इति जल्पन् पृथक्-पृथग् अमुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ।"

दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवा दशाः ।

अत्र च एतद्वः पितरो वास इति षट्कृत्वः पठनीयम् । पूर्वभागस्तु सकृदेवावृत्त्यनभिधानात् । अत्र सूत्राणीति वचनात् प्रतिपिण्डं सूत्राणि देयानि, तेन पिण्डसूत्रदानानन्तरमुत्सर्गः । तत एवमेव पितामहादिपिण्डदानमुत्सर्गश्च ब्रह्मपुराणवाक्ये स्फुटमेव काण्डानुसमयप्रतीतेरिति ।

एतद्वो मत्पुत्रत्वकरीपतिश्वशुरप्रश्वशुरा वास इति वाक्यमाचरन्ति, तन्न मनोरमम्; प्रत्येकमेषां देवतात्वेन सूत्रदानेऽर्थान्वयात् । न हि पुत्रत्वकरीपतित्वं श्वशुरत्वं प्रश्वशुरत्वं चैतेषां प्रत्येकमस्ति । एतद्वः पितरो वास इत्यत्र पितृपदस्य प्रत्येकमेव शक्तेः, प्रत्येकमेव देवतात्वेनार्थान्वयः । एतद्वः पितरो वास इति जल्पन् पृथक् पृथगिति वचनबलेन एकस्मिन्नपि बहुवचनान्तस्य पितृपदस्य प्रयोगात्, साधुवादबहुवचनम् । प्रकृते तु पदत्रयभिन्नभिन्नार्थकत्वेन प्रत्येकं समुदायप्रतिपाद्यत्वाभावात्, तथा च एतद्वो मत्पुत्रत्वकरीपतयो वास एतद्वो मत्पुत्रत्वकरीश्वशुरो वास एतद्वो मत्पुत्रत्वकरीप्रश्वशुरो वास इति वाक्यं कर्त्तुमर्हं भवतीति ।

'वसन्ताय नमस्तुभ्यम्' इति मन्त्रेण वसन्तादीनां नमस्कारः, न तु लौकिकवाक्येन पूजनम्, मानाभावादिति । श्राद्धशेषेणैव वैश्वदेवबलिहन्तकाद्याः ।

निवृत्य प्रणिपत्याथ पर्युक्ष्याग्निं समन्त्रवत् ।
वैश्वदेवं प्रकुर्वीत नैत्यिकं बलिमेव च ॥
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ।

इति मत्स्यपुराणे शेषेणैवातिथिभोजनविधानादस्य च तण्डुलरूपत्वात्। नन्वयं कालविधिरेव, प्रत्युत 'निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते' इत्यादिना निर्वापहोमयोः समानोद्देश्यताप्रतिपादनात् कथमेवमिति चेन्न; पर्युक्ष्याग्निमित्यनेन दक्षिणाग्नेरेवाभिधानात्। शेषस्यैव हविर्द्रव्यत्वसिद्धेरनपवादाच्च। निरूप्येत्यादिवचनमग्नौ करणहोमस्य प्राचीनावीतितायां बीजाभिधानपरम्, अतो न किञ्चिदेतदिति।

श्राद्धान्तरं तु पाकान्तरेण, पाकस्य तत्राङ्गत्वात्। न चाङ्गत्वेन प्रधानतिथिनियमः, नियमादृष्टभिन्नापूर्वरूपोपकारजनकत्वाभावात्, अन्यथा परेषामपि कुतपमात्रलाभे श्राद्धबाधापत्तेरिति।

अग्नौ करणहोमस्तु कर्त्तव्य उपवीतिना।
प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः॥
अपसव्येन वा कार्यो दक्षिणाभिमुखेन तु।
निरूप्य हविरन्यस्मा अन्यस्मै न च हूयते॥

अत्र स उद्वास्य द्वे आहुती जुहोतीति पिण्डपितृयज्ञे शतपथश्रुतेरग्नौ करणहोम उपवीतिना पूर्वाभिमुखेनैव कार्यो हेतुमन्निगदबलादिति प्रथमश्लोकार्थः। पितृभ्यो निर्वपामीति चरुनिष्पत्तये व्रीहिनिर्वापः कृतः, होमनिर्वापयोः सामानोद्देश्यत्वनियमात्। अपसव्येन दक्षिणाभिमुखेनैव कार्यो हेतुमन्निगदबलादिति द्वितीयश्लोकार्थः। अत्र च प्रथमः कल्पः पूर्वपक्षो द्वितीयः सिद्धान्त इति केचित्' तन्न; हेतुमन्निगदविरोधात्। धर्मशास्त्रस्यास्य वेदमूलकत्वेनात्र पूर्वपक्षसिद्धान्तयोरभावात्। ननु—

पृथक् तयोः केचिदाहुः श्राद्धस्य करणं नृप।
एकत्रैकेन पाकेन वदन्त्यन्ये महर्षयः॥

इत्यत्र केचिदित्यभिधानेन पूर्वपक्षत्वावगतिः। महर्षय इति सपुरस्कारमभिधानेनोत्तरस्य सिद्धान्तत्वागतेः। भ्रान्तोऽसि, अत्रापि व्यवस्थितविकल्पत्वात्, यदि यजमानः शेषधारणाकांक्षी तदा पृथक् पाकेन, अन्यथा त्वेकेनैवेति तदर्थात्। तस्मादत्रापि उदितादिहोमवच्छाखादिभेदेनैव विकल्पस्य व्यवस्थितत्वात्, तेन गोभिलीयानां सव्येनैव होममभिधायानुपदमेव, अतः परं प्राचीनावीतिना भाव्यमिति गोभिलात्। माध्यन्दिनीयानां त्वपसव्येनैव, "प्राचीनावीती भूत्वा दक्षिणासीनः" इत्युपक्रम्य "स उद्वास्य द्वे जुहोति"इति शतपथश्रुतेः। अत्र च भ्रान्तानां विपरीताचारे परमगुरुचरणैरेव तत्र तत्रोक्तमपसव्येनैवमिति दिक्।

आमश्राद्धपक्षे परितस्तिलविकिरणं छागबन्धनं च नास्ति, तत्रेत्यनेन देवलवचनेन पाकस्थानस्यैव प्रत्यवमर्षादिति केचित्, तन्न; मनुना श्राद्धदेश एव तद्विधानात्, देवलस्याप्येकवाक्यतया तत्परत्वादिति।

कात्यायनः—

'शेषमन्नं किं क्रियतामिष्टैः सह भुज्यताम्' इति। अत्र च यावद्वचनं हि वाचनिकमिति न्यायादनुज्ञानमात्रादेव शास्त्रार्थसिद्धिरत एकादश्यादौ भक्षणाभावेऽपि नाङ्गवैगुण्यमिति केचित्, तन्न; ततः—

ज्ञातिषु तुष्टेषु स्वान् भृत्यान् प्रतिपूजयेत् ।
पश्चात् स्वयं च पत्नीं च पितृशेषमुदाहरेत् ॥

इति देवलविरोधात् । सति शेषे तद्भक्षणमङ्गम्, अत एव एकादश्यादौ तन्न धार्यमित्यपरे, तदप्यसत्; देवलेन तद्धारणविधानात्, सतीत्यत्रैव मानाभावात् । एकादश्यादौ भक्षणनिषेधान्न तत्र भक्षणमङ्गमित्यन्ये, तदपि न; प्रेतश्राद्धे यदुच्छिष्टमित्यादिना तद्भक्षणनिषेधात् । परे तु रागप्राप्तस्यापि विधानमङ्गत्वार्थम, इज्यायामावाहनबाधवदेकादश्यां भक्षणं विनापि तत्सिद्धिरिति, तन्न; वैषम्यादन्यथोपपत्तेर्वक्ष्यमाणत्वात् । अत्र भक्षणस्य रागप्राप्तत्वेन समुच्चितस्य न विधेयत्वम्, किन्तु परिसंख्यापरत्वम् । अतस्तद्भक्षणाभावेऽप्येकादश्यादौ श्राद्धसिद्धिरिति । अत एव हविष्यव्रते एकभुक्तव्रते च भोजनाभावेऽपि नाङ्गवैगुण्यम्, परिसंख्यापरत्वात् । अत एव वत्सरान्तसपिण्डतासिद्धिरपि परास्ता । वस्तुतस्तु शेषान्नस्याघ्राणमात्रेणैव शास्त्रार्थसिद्धिः, अतस्तद्भोजनाभावे नाङ्गवैगुण्यम् । तदुक्तं कालादर्शलिखितश्रुतौ—'एकादश्यादौ पिण्डमाघ्रेयं तन्नैव प्राशितं नैवाप्राशितं भवति'इति ।

वराहपुराणे—

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासस्तदा कुर्यादाघ्राय पितृसेवितम् ॥ इति ।
एकोद्दिष्टस्य पिण्डे तु अनुशब्दं न युज्यते ।
पितृशब्दं न कुर्वीत पितृहा चोपजायते ॥ इति ।

प्रेतप्रकरणीयवाक्यबलाद् गोभिलीयानां प्रेतैकोद्दिष्टे ये चात्रेत्यादिशब्दोल्लेखो न कार्य एव, तदतिरिक्ते तु सांवत्सरिकादौ पुंसः श्राद्धे कार्य एवापादकाभावात् । स्त्रियास्तु श्राद्धे कुत्रापि न कार्यः—

पितुर्नाम गृहीत्वासावेतत्ते तिलोदकम् ।
ये चात्र त्वानुयांश्चात्वमनु तस्मै ते स्वधा ॥

इति विशेषश्रुतेः ।

एवं माध्यन्दिनीयानां स्त्रियाः पुंसो वा प्रेतश्राद्धे विकृतस्य नमो व इत्यस्य न पाठः, "पितृशब्दं न कुर्वीत" इत्यादिवचनात् । श्राद्धान्तरे तु तदुल्लेखः कार्य एव, प्रेतश्राद्धप्रकरण एव श्रुतेः । गौडास्तु समस्त एव पितृश्राद्धे पितृशब्दोल्लेखो न कार्यः, प्रकरणबलादसंकोचाच्चेत्याह, तन्मन्दम्; पिण्डेष्विति कारकविभक्तिश्रुतेः । ननु छन्दोगानामनुशब्दनिषेधोऽपि तत्रैव स्यात्, न स्यात्,

प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यात् ।
स्वस्त्यस्तु विसृजेदेनं सकृत् प्रणववर्जितम् ॥

इत्याश्वलायनीयविशेषनिषेधात् । पितृशब्दनिषेधे च पितरिदं तेऽर्घ्यमित्याद्यनेकश्रुतिस्मृतिविरोधापत्तेरिति दिक् । पितामहादीनामेव पिण्डदानं वामान्वारब्धदक्षिणकरेण "पिण्डा निदध्यात् सव्येन पाणिना दक्षिणमुपसमाधाय" इत्यबाधितसूत्रात् ।

उत्क्रमादाय पिण्डं तु कृत्वा विल्वफलोपमम् ।
दद्यात् पितामहादिभ्यो दर्भमूलाद् यथाक्रमम् ॥

बहुवचनं तु मातामहादिपिण्डापेक्षया, पितृपिण्डदानं तु पाणिभ्यामेव "सव्येतराभ्यां प्रथमं पिण्डमावपेत्" इति वचनात्। न च 'क्षौमे वसनावग्नीनां दधीयाताम्'इतिवदत्राप्यस्तु इति वाच्यम्। एवं हि प्रथमपदस्य वैयर्थ्यापत्तेरिति। न चैकवचनवन्मन्त्रानूहेन 'एकोद्दिष्टे' इति सूत्रात् प्रकृतिप्राप्तानां बहुवचनवन्मन्त्राणां समवेतार्थानां विकृतौ तावदेकवचनोहः, अत एवाग्नये त्वा जुष्टं निर्वपामीत्यत्र सूर्याय त्वाजुष्टं निर्वपामीति देवतोहः। असमवेतार्थानां तु नोहः। अत एव दक्षे पशावेकपाशिकायां रज्जौ प्रकृतौ 'स्वधितिस्ते पाशं प्रमुमोक्तु स्वधितिस्ते पाशान् प्रमुमोक्तु' इति मन्त्रद्वये द्विपाशिकायां विकृतावेकवचनान्तो द्विवचनान्तः कृत्वोह्यते, प्रकृतौ समवेतार्थकत्वात्। द्विवचनान्तस्तु नोह्यते, प्रकृतावेवासमवेतार्थकत्वात्। तथा च 'नमस्ते माता रसाय नमस्ते पिता रसाय' इति सिद्धयतु। एतत्ते पितर्वास इति कथम्? प्रकृतावेवासमवेतार्थकत्वात्। 'एतद्वः पितरो वासः' इति जल्पन् पृथक् पृथगिति श्रवणात्। न च न्यायलभ्यो नायमूहः, किन्तु वाचनिक एव, तथा चात्र स्यादेवेति वाच्यम्; तथा सति 'आयन्तु नः पितरः' इत्यादावप्यूहापत्तेः। तस्मादेतद्वः पितरो वास इत्यत्र बहुवचनं नोह्यम्, किन्तु प्रकृतिभूतं पितृशब्दमात्रमिति केचित्तन्न; यत्र हि प्रकृतौ स्वारसिक्यसमवेतार्थकता, तत्र विकृतौ नोहः, यथा 'शुन्धन्तां पितरः' इत्यत्र। अत्र तु 'पृथक् पृथगिति' वचनात् प्रकृतौ बहुवचनस्यासमवेतार्थकता, तत्र तु विकृतावेकोद्दिष्टे बहुवचनस्योह एव, अन्यथा विभक्तीनां साधुतैव न स्यात्। द्विधा हि विभक्तीनां साधुता, प्रकृते च त्वन्मते सौत्री साधुता नास्त्येव, प्रयोगसाधुतापि तद्बहुवचनस्य पार्वण एव, वीप्सावलात्, न त्वेकोद्दिष्टे। तत्र वीप्सासहितवाक्यापवृत्तेरिति। तृतीया च विभक्तीनां साधुता नास्त्येवेत्यकामेनापि द्वयमप्यूह्यमेवेति। श्राद्धविवेके तु नात्रापैकोद्दिष्टे एतद्वः पितरो वास इत्यत्र द्वयमपि नोह्यमिति तत्राप्युक्तमेवेति दिक्।

रुद्रः[१] श्वेतश्च[२] मैत्रश्च[३] ततो गोरभटस्तथा[४]।  
सावित्रो[५] विजयश्चैव[६] गान्धर्वः[७] कुतपस्तथा[८]॥  
रौहिणोऽथ[९] विरञ्चिश्च[१०] सोमो[११] निर्ऋतिरेव च[१२]।  
माहेन्द्रो[१३] वरुणश्चैव[१४] भटः[१५] पञ्चदशः स्मृतः॥  
अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा।

अत्र पूर्वोत्तरयोर्दिनयोर्मध्याह्ने क्षयतिथिलाभे कपालाधिकरणन्यायेन एकोद्दिष्टं तावत्पूर्वदिन एवेति सकलजनसिद्धम्, 'एकोद्दिष्टं तु मध्याह्ने' इति वचनात्। यत्र पूर्वदिने मध्याह्नालाभस्तत्रोत्तरदिन एव तिथिद्वैधाभावात्, "रौहिणं तु न लंघयेत्" इति श्रुतेश्च। यदि चैकत्र गान्धर्वकुतपरौहिणानां लाभस्तदा गुणफलार्थिना कुतप एकोद्दिष्टश्राद्धं कार्यम्, शिवसन्निधावनन्तफला सन्ध्येतिवत्। न च गान्धर्वातिक्रमक्षेपशंका, तथापि मध्याह्नानाक्षेपात्। पूर्वदिने तु यदि रौहिणमात्रलाभस्तदापि रौहिण एव श्राद्धम्, न तु गुणफलानुरोधेनोत्तरत्र, एकोद्दिष्टविहिता स्वाभ्युपगतमध्याह्नाक्षेपापत्तेः। न च गुणविधेरननुष्ठानलक्षणाप्रामाण्यापत्तिः, तस्य मध्याह्नव्यापकतिथिपरत्वेनैवोपपत्तेः। एवं मध्याह्नाप्रतिक्षेपे यत्र गुणफलयोगस्तत्रैव तदर्थं प्रवृत्तिरिति वज्रलेपायितम्। अतः—

ऊर्ध्वं मुहूर्त्तात् कुतपाद्यन्मुहूर्त्तचतुष्टयम्।  
मुहूर्त्तपञ्चकं वापि स्वधा वाचनमिष्यते॥

इति विधेरमावास्यायां पितृभ्यो दद्यादिति श्रवणाद् द्वयोरेकवाक्यतया रात्र्यादौ श्राद्धाप्राप्त्या—

रात्रौ श्राद्धं न कुर्वीत राक्षसी सा हि कीर्तिता।
सन्ध्ययोरुभयोर्वापि सूर्ये चैवाचिरोदिते॥

इत्यत्र वाक्यभेदापत्त्या पर्युदास एव नञर्थः, तेन पर्युदस्तेतरकाले श्राद्धविधिः। अत एव

सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः।
तयोरपि च कर्तव्यं यदि स्याद् राहुदर्शनम्॥

इति वचनेऽपि तयोरित्यत्र पर्युदस्तकाल एवाभिहितः, अन्यथाऽचिरोदितकालसूर्यग्रासे श्राद्धबाधापत्तिः। अत एव—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च॥

इत्यपि संगच्छते। केचित्तु—

पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥

इति श्रवणात् सिद्धे सत्यारंभस्य नियमार्थत्वात्, अन्यथा वैयर्थ्यापत्तेः। तेन कृष्णपक्षे पार्वणेऽपराह्णनियम एव, एकोद्दिष्टेऽपि मध्याह्ननियम एवेत्याहुः, तन्न;

यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते।
तथा श्राद्धस्य मध्याह्नादपराह्णो विशिष्यते॥

तथा—

दर्शे श्राद्धं तु यत् प्रोक्तं पार्वणं तत्प्रकीर्तितम्।
अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते॥

तथाऽपरपक्षस्यापराह्णः श्रेयानिति कण्ठत एव प्राशस्त्याभिधानात्। न च परनिरपेक्षस्य प्राशस्त्यस्य नियमपरतैव, गौरवमानाभावाभ्यासप्रयोजकत्वात्, पूर्वोत्तरदिनयोरेवापराह्णालाभे पार्वणलोपापत्तेश्च। किन्तश्छिन्नमिति चेत्, भ्रान्तोसि; उक्तयुक्त्या नियमे प्रत्यादिष्टे 'अमावास्यायां पितृभ्यो दद्यात्' ऊर्ध्वम्मुहूर्त्तात् कुतपाद्यं मुहूर्त्तचतुष्टयम्' इत्यनयोरेकवाक्यतयाऽमावास्यापार्वणस्य पर्युदस्तेतरकालकर्त्तव्यत्वे नियमिते तत्र च श्राद्धलोपे विधिविरोधस्य वज्रलेपायितत्वात्। अथ सर्वाण्येव दशमुहूर्त्तरूपकालविधायकानि वचनानि मध्याह्नापराह्णरूपप्रशस्तकालविशेषपराणि। तथा—

औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश॥

इति सामान्यवचनम् 'पार्वणेन विधानेन देयमग्निमता सदा' इति मत्स्यपुराणीयविशेषवचनपर्यालोचनया विशेषपरमिति चेत्, तत्र मुनिभेदादत्र मनुनैव रात्रौ श्राद्धं न कुर्वीतेति पर्युदासमभिधाय 'अपराह्णो विशिष्यते' इत्युक्तम्। तथा चात्र सामान्यस्य विशेषपरत्वे स्वकृत-

सामान्योपादानं व्यर्थमेव स्यादिति।

ननु तर्ह्येकोद्दिष्टे मध्याह्ननियम एवास्तु, बाधकाभावादिति चेन्न; एकादशाहे द्वादशाहेऽथवेति श्रवणादेकोद्दिष्टे मध्याह्ननियमेन तद्विधेरननुष्ठानलक्षणमप्रामाण्यं स्यात्। हन्त, तर्हीत एव यावद्वचनं हि वाचनिकमिति न्यायेन तत्रानियमोऽस्तु, अन्यत्र तु नियम एवेति चेन्न, पूर्वोत्तरदिनयोर्मध्याह्ने क्षयतिथ्यलाभे तद्वर्षे वार्षिकलोपापत्त्या 'प्रतिसंवत्सरं राजन्नेकोद्दिष्टं विधानतः' इत्यत्र 'प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया बुधैः' इत्यादौ च सर्वत्र वीप्साबाधापत्तेः।

अथ वीप्सयाऽपि प्रत्यब्दमध्याह्ने श्राद्धं कुर्वीतेत्येव वक्तव्यम्, मध्याह्नस्य नियमितत्वात्। मध्याह्ननियमे वीप्सायास्तद्भिन्नविषयकत्वे च मध्याह्ननियम इत्यन्योन्याश्रयात् 'मृताहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम्'इत्यत्रात्यन्तसंयोगविधिबाधापत्तेश्च। भ्रान्तास्तु 'सति सम्भवे स एवादर्तव्यः' इति मैथिललिखनानुरोधात् सति संभवे मध्याह्नापराह्णनियममिच्छन्ति, तत् तुच्छम्; नियम एव मानाभावेन संभवनियमस्य दूरापास्तत्वात्, निबन्धलिखनस्य गुणपरत्वेनैवोपपत्तेः। शुक्लपक्षे पार्वणे तु पूर्वाह्णनियम एवापवादकाभावादिति सर्वं रमणीयम्।

'रौहिणं तु न लङ्घयेत्' इति वचनं तु पार्वणपरमेव, तन्मात्रकालस्यैव प्रक्रान्तत्वादिति गौडास्तन्मन्दम्। एवमस्यानुवादकतापत्तेः पूर्वाह्णापराह्णयोः शाब्दत्वेव प्राप्तिः, अत एतद्बलादेव शुक्लपक्षे तूत्तरावधित्वमपरपक्षे पूर्वावधित्वम्, अतोऽस्य विधायकत्वमेवेति। हन्त ? तर्हि इत एव कृष्णपक्षापराह्णः श्रेयानित्यस्यैवानुवादकतापत्तेः, रौहिणमित्यनेनापराह्णस्य लाभात्। न च कृष्णपक्षसमभिव्याहारादेव तल्लाभः, तात्पर्यगौरवापत्तेः। तस्मात्

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणं न तु लङ्घयेत्॥

इति गौतमवचनमेकोद्दिष्टपरमेव। एवं सपिण्डीकरणमेकोद्दिष्टपरमेव, प्राधान्यादेकोद्दिष्टव्यपदेशाच्च तद्धर्मलाभाद्रौहिणोत्तरसमयः सपिण्डने सर्वथा निषिद्धः। गौडास्तु सपिण्डीकरणस्य पार्वणरूपत्वादपराह्णकर्त्तव्यत्वमिच्छन्ति। अथापूर्वरूपोपकारजनकाङ्गानां प्रधानदेशकालनियमात् पाकस्य तु "आरभेत नवैः पात्रैरन्नारम्भं सबान्धवः" इति स्मृतेः, तथात्वेनैकोद्दिष्टे च—

एकोद्दिष्टं तु कर्त्तव्यं पाकेनैव सदा स्वयम्।

इति वचनात् पाकस्य नियतत्वादस्तूत्तराहे तत्रानुष्ठानमिति न पाकस्य व्रीहीनवहन्तीतिवद् नियमादृष्टभिन्नादृष्टजनकत्वे मानाभावान्नियमादृष्टमात्रजनके पाके तत्तिथिकर्त्तव्यतानियमाभावात्, अन्यथा तवापि प्रथमदिने कुतपमात्रलाभे श्राद्धबाधापत्तेः, न चैकोद्दिष्टे कुतपनियम एव, मानाभावात्, 'तत्र दत्तमथाक्षयम्'इति श्रुतेश्च।

श्वः कर्तास्मीति निश्चित्य दाता विप्रान् निमन्त्रयेत्।
निरामिषं सकृद् भुक्त्वा सर्वभुक्तजने गृहे॥

इति वचनान्निरामिषसकृद्भोजनं कर्तृसंस्कारद्वारा श्राद्धाङ्गम्। तत्रामावास्यादौ क्षयाहे वामावास्याक्षयाहश्राद्धयोः श्वोभावितिथिकर्तव्यत्वकस्योभयोरपि निश्चयादङ्गानुष्ठान-

मप्रत्यूहमेव । तीर्थप्राप्तिक्षतान्तयोरुभयोरपि श्वोभावित्वानिश्चयेन तयोः श्राद्धकर्तव्यतानिश्चयेऽपि न तदङ्गानुष्ठानम् 'निश्चित्य' इत्युक्तवचने श्रवणात् । न च सर्वत्र भाविनिश्चयाभावाद-ननुष्ठानमेवास्तु, विध्यन्यथानुपपत्त्या तत्संशयस्याप्रयोजकत्वादन्यथाऽननुष्ठानलक्षणा-प्रामाण्यापत्तेः । कथं तर्हि विवाहादावाभ्युदयिके श्वोभावित्वनिश्चयाभावेऽपि तदङ्गानुष्ठानम् ? वैवाहिकविध्यन्यथानुपपत्त्या निमित्तानिश्चयेऽपि नित्यनैमित्तिकश्राद्धाधिकारे सिद्धेऽङ्गानां प्रधानरीत्यन्वये प्रधानाधिकारवदङ्गेऽपि सन्देहे तत्राधिकारात् । अत एव निर्विचिकित्सं शिष्टानां तथाचार इति दिक् ।

तथैवामन्त्रितो दाता प्रातःस्नातः सहाम्बरः ।
आरभेत नवैः पात्रैरन्नारम्भं सबान्धवः ॥

इति देवलवाक्येन स्वस्य सपिण्डानां च पाकाधिकारः, तथापि पत्न्याः सपिण्डायाश्चा-धिकारः 'स्वयं पत्न्यपि वा पचेत्' इति श्रुतेः ।

रजस्वला च या नारी व्यङ्गिता कर्णयोस्तथा ।
निर्वापे नोपतिष्ठेत संग्राह्या नान्यवंशजा ॥

इति भारतवचनेनान्यवंशजाताया एव निषेधात् । अशौचाभ्यन्तर एव श्राद्धे तु कर्तुरेव पाकाधिकारः, नान्यस्य, तस्यैव परं तत्र शौचोपदेशादिति । नवैः पात्रैरिति मृन्मयभाण्डैरनुपहतैरिति यावत् ताम्रमयैरिति गणेश्वरमिश्राः । वस्तुतस्तु नवैः पात्रैरनिषिद्धपात्रैरित्यर्थ इति दिक् ।

मत्स्यपुराणे—

पुनर्भोजनमध्वानं द्यूतमायासमैथुनम् ।
श्राद्धभुक् श्राद्धकृच्चैव सर्वमेतद् विवर्जयेत् ॥
स्वाध्यायं कलहं चैव दिवा स्वप्नं च सर्वदा ।

कात्यायनः —

"तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान् वर्जयेत् ।"

विष्णुपुराणे—

श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियुज्य वा ।
व्यवायी रेतसो गर्ते मज्जयेदात्मनः पितॄन् ॥

व्यासः—

अध्वनीनो भवेदश्वः पुनर्भोजी तु वायसः ।
होमकृन्नेत्ररोगी स्यात् पाठादायुः प्रहीयते ॥
दानं निष्फलतामेति प्रतिग्राही दरिद्रताम् ।
कर्मकृज्जायते दासो मैथुनी शूकरो भवेत् ॥

होमोऽत्रानावश्यकः, दानमन्नाद्यतिरिक्तस्य तत्र च तदहरिति कात्यायनवचनात् । कर्तुरध्वश्रमस्वाध्यायादिवर्जनं श्राद्धात् प्रागपि, एकदेशे विष्णुपुराणसंवादात् । एतेन श्राद्धानन्तर-

मेवैतेषां निषेध इति परेषां मतमपास्तम् । यत्तु 'श्राद्धं कृत्वाऽष्ट वर्जयेत्'इति, तदपि यदि समूलं तथाप्यत्यन्तनिषेधपरमिति ।

"अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम्"इत्यत्रामावास्योत्सर्गतः श्राद्धनिमित्त-मनग्नेस्तत्राखण्डामावास्यापराह्ण एव श्राद्धम्, संशयाभावात् । सखण्डायां तु दिनद्वयेऽप्यपराह्णलाभे पूर्वदिन एव, कपालाधिकरणन्यायात् । दिनद्वयेऽप्यपराह्णालाभे उत्तरदिनमध्याह्न एव श्राद्धम्, तिथिमात्रलाभात् ।

यथा चैवापरः पक्षः पूर्वपक्षाद् विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥

इति शातातपवचनेन, तथा 'अपरपक्षस्यापराह्णः श्रेयान्'इत्यापस्तम्बवचनेन तत्प्राश-स्त्यस्य कण्ठतोऽभिधानात् । अत एवापराह्णे नियमः संभवनियमो वाप्यपास्तः । ननु पूर्वाह्णे तु पैत्रिकमिति निष्फलत्वनिर्देशादस्तु नियम इति चेत्, भ्रान्तोऽसि; मन्वापस्तम्बशातातपवचनविरो-धात् । एवं च शुक्लपक्षे पूर्वाह्णनियम एव ।

शुक्लपक्षे तु पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षेऽपराह्णे तु रौहिणं न तु लङ्घयेत् ॥

इति वचनात् ।

हन्तैवमपराह्णे तु पैतृकमिति वचनविरोधः, मन्वादिवचनपर्यालोचनया शुक्लपक्षस्य पूर्वाह्ण इति श्रुतेस्तस्य कृष्णपक्षमात्रपरत्वादिति ।

एकोद्दिष्टं तु कुर्वीत पाकेनैव सदा स्वयम् ।

इत्येकोद्दिष्टे विशेषाभिधानलाभादपाटवादौ पुत्रादिद्वारापि पार्वणमेव कारयितव्यम्, न त्वेकोद्दिष्टमपि । अत एव गौडानामाचारोऽप्येवम् । न च स्वयंशब्दस्य पाक एवान्वयः, प्रथमस्य पूर्णाकांक्षत्वेनानन्वयात्; विमलं जलं नद्याः कच्छे महिषश्चरतीतिवन्निराकांक्षत्वादिति । अमावास्यायां मध्याह्ने राहुदर्शने कथं त्रैवर्णिकानां क्षयाहश्राद्धसिद्धिः ? तत्र तेषां पाकस्य नियतत्वादेकोद्दिष्टं तु कुर्वीतेत्यादेरनुपदमेवाभिधानात् ।

प्रेतश्राद्धे यदुच्छिष्टं ग्रहे पर्युषितं च यत् ।
दम्पत्योर्भुक्तशेषं च न भुञ्जीत कदाचन ॥

तथा—

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥

इत्यादिना पूर्वसिद्धस्य तदानीं सिद्धस्य वाऽकर्मण्यत्वप्रतिपादनादिति चेत्, उच्यते—अखण्डामावास्यायां तथा खण्डामावास्यायामपि चतुर्दशीयुक्तायां मध्याह्ने ग्रासस्यासंभवात्, प्रतिपद्युक्तायां तु सखण्डायां मध्याह्ने राहुग्राससंभवेऽपि पर्युदस्तेतरकालतृतीयादिमुहूर्त एव श्राद्धम्, बाधकाभावात्, मध्याह्नस्य प्रशस्तत्वात् । न च ग्रासस्य च तत्र विहितसकलमुहूर्त-व्यापकता, मानाभावात् । मध्याह्नव्यापनेऽपि नानुपपत्तिः, तत्रोत्तराहे पूर्वचरमभाग एव नियमात्, सपिण्डीकरणं तु संभवत्कालान्तरमेव कार्यमिति तत्र नानुपपत्तिः । दैवादेकादशाहे ग्रासपूर्वं ग्रासोत्तरं वा वृषोत्सर्गादिकं विनापि श्राद्धसिद्धिरगतिकत्वादिति ।

अपराह्णव्यापिन्याममावास्यायां रविग्रहे ग्रहणश्राद्धेनैवामावास्याश्राद्धस्यापि प्रसङ्गादेव सिद्धिः, प्रसङ्गविरोधिनोऽभावात्। सायाह्ने तु रविग्रहे पृथगनुष्ठानमेव, कालभेदेन प्रसङ्गाभावात्। एवं चाचिरोदितादौ ग्रासे पृथगनुष्ठानमेव, तत्रामावास्याश्राद्धस्यापि पूर्वदिन एव प्रवृत्तेरिति सुव्यक्तमेवेति दिक्।

अमावास्यायामेव तीर्थप्राप्तौ अमावास्याश्राद्धमेव कार्यम्, न तु तीर्थप्राप्तिनिमित्त-कमधिकाङ्गेनाल्पाङ्गस्य निर्वाहादिति केचित्। तत्रागन्तुकतीर्थश्राद्धमेवावश्यकम्। "अकालेऽप्यथवा काले' इत्यादिनाऽमावास्यादिकालेऽपि प्राप्त्युत्तरश्राद्धाननुगुणकालान्तरितविहितमुहूर्त-कर्तव्यतया बोधनादिति।

तदानीमेव ग्रहोपरागे तन्निमित्तकमेव श्राद्धं कार्यम्, तस्य तत्कालमात्रकर्तव्यत्वेन निरवकाशत्वात्। तत्रैव पितुरेकादशाहेऽमावास्यादिश्राद्धस्य बाधितत्वात्। पित्रन्यप्रमीतस्य पितुरेकादशाहश्राद्धे सपिण्डने चाकृतेऽन्तराग्रहणनिमित्तकमेव श्राद्धं कर्तव्यम्। सपिण्डनस्यान्यदापि सम्भवादिति साम्प्रदायिकाः।

कार्त्तिक्यादौ वृषोत्सर्गे शुद्धसमयापेक्षा इष्टत्वादिति। अत्र सर्वत्र प्रधानयो-र्न्यूनाधिकाङ्गयोरप्येकस्मिन् क्रियमाणे प्रसङ्गादेवापरस्यापि सिद्धिः, आम्राश्च सिक्ताः पितरश्च तृप्ता इतिवत्, न तु तन्त्रेण तयोरुद्देश्यताविरहात्। अत एवाङ्गे क्रियमाणे प्रसङ्गादेव प्रधान-सिद्धिः। यथोदयोत्तरक्रियमाणेनाङ्गतर्पणेन प्रसङ्गात् स्वतन्त्रतर्पणस्यापि सिद्धिरङ्गयोश्च तन्त्रेणैव सिद्धिरुद्देश्यतासत्त्वात्। अनेकोद्देशेन एकानुष्ठानक्रियातन्त्रमिति तल्लक्षणात्। अत एव नामकरणचूडाकरणयोः सुतसंस्कारत्वेन द्वयोरुद्देश्यता भवति, तेन सकृदेव नान्दीमुखश्राद्धानुष्ठान-मिति सिद्धान्तः। काम्येन त्वमावास्याश्राद्धेन नित्यस्य नैमित्तिकस्यापि प्रसङ्गादेव सिद्धिः, न तु नित्येन नैमित्तिकेन वा काम्यसिद्धिरधिकारभेदात्। एवं च तत्र तत्र निबन्धे "प्रधानयो-स्तन्त्रेणाङ्गयोः प्रसङ्गेन" इति लिखनं तत्प्रकृतपरतयैव नेयमिति दिक्।

देये पितॄणां श्राद्धे वै अशौचं जायते यदि।
अशौचे तु व्यतीते वै तेषां श्राद्धं विधीयते॥

अत्राशौचं पुरुषप्रयत्नानपनेयम्, तदपनेयस्य तु श्राद्धार्हविहितशौचादेवापगमात्। तत्राशौचनिवर्तनीयत्वे सति क्षयाहनिरूप्यत्वमेव तन्त्रम्। तथा च जननमरणरजोयोगाद्यत्यये विहितमुहूर्ते श्राद्धं कार्यत एव, निषिद्धमुहूर्ते क्षताद्यभावे विहितमुहूर्तालाभेऽग्रिमदिने तत्कार्यम्, तत्रापि कुत्र दिने इत्यपेक्षायां स एवाह—

शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तत्र कर्तव्या न त्वन्या वै कदाचन॥

एवं च स एव मासः, स एव पक्षः, सैव तिथिः प्रधानत एवोल्लेख्या, 'या तिथिः प्रतिपद्यते' इत्यादेर्द्वन्द्वबलात्। श्राद्धे 'प्रतिबन्धकाऽशौचव्यपगमे' इत्यपि निवेश्यम्, 'अशौचे तु व्यतीते' इति स्मरणात्। तदित्थमत्र प्रयोगः "ओम् अद्यामुके मास्यमुके पक्षेऽमुकतिथौ क्षयाहश्राद्धप्रति-बन्धकाशौचव्यपगमेऽमुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये" इति। साम्प्रदायिकास्तु ओमद्य वैशाखशुक्लदशम्यां तिथावित्याद्युल्लिख्य प्रयोगमाहुः, तच्चिन्त्यम्। मासपक्षतिथीनामिति द्वन्द्वविरोधात्, तिथावित्यस्य वैयर्थ्याच्च।

अत्र—

सपिण्डीकरणादूर्ध्वं यत्किञ्चिच्छ्राद्धिकं भवेत् ।
इष्टं वाप्यथवा पूर्तं तन्न कुर्यान्मलिम्लुचे ॥

इत्यसंकुचितनिषेधबलाद् व्रणाद्यशौचापगमेऽपि मलमासे वार्षिकश्राद्धं न कार्यमिति प्राच्यास्तन्न साधु ।

प्रतिसंवत्सरं श्राद्धमशौचात् पतितं च यत् ।
मलमासेऽपि तत्कार्यमिति भागुरिरब्रवीत् ॥

इति वचनस्य प्रामाण्यसंशयेऽपि—

देये पितॄणां श्राद्धे वै अशौचं जायते यदि ।
अशौचे तु व्यतीते वै तेषां श्राद्धं विधीयते ॥

इत्यनेनाशौचान्ते तत्करणे प्रसक्ते—

शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्तव्या न त्वन्या वै कदाचन ॥

इत्यनेन तत्तिथावेव तत्कर्तव्यत्वावगमात् । तथा चान्त्याधिमासवन्नियमबलादेव सामान्यनिषेधे संकोच एवेति तत्त्वम् ।

अमावास्याऽपरपक्षमृतस्य सांवत्सरिकश्राद्धमशौचान्ते क्रियमाणमप्यावाहनादिमदेव कार्यम् ।

अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः ।

इति वाक्यलिङ्गात् । क्षयाहनिमित्तकश्राद्ध एव पार्वणेतिकर्त्तव्यताकत्वविधानात्तदधिकरणकत्वस्याप्रयोजनकत्वेन हेयत्वात् । किं च यादृशं श्राद्धमशौचादिप्रतिरुद्धं तादृगेवाऽशौचान्ते ऋष्यशृङ्गवचनेन प्रतिप्रसूयत इति ।

यत्रैकस्मिन् दिने क्षयाहनिमित्तकं श्राद्धमशौचादिप्रतिरुद्धं च श्राद्धान्तरं कर्त्तव्यत्वेनापतति, तत्र प्रथमं क्षयाहनिमित्तकं श्राद्धमाचरणीयम्, तदनन्तरं श्राद्धान्तरम्, आगन्तूनामन्ते निवेशादिति । बहूनामागन्तूनां सन्निपाते तेषामुपस्थितिक्रमेणैव ।

एकोद्दिष्टे तु सम्प्राप्ते नवे पर्युषिते तथा ।
पितुः प्रथमतः कुर्यादन्यस्यासत्तियोगतः ॥

इति च्छत्रे शुक्लग्रन्थे निर्णयामृते च दृश्यते । एवं च एकाहमृतयोः पित्रोरशौचान्तद्वितीयदिने पितुः शय्यादानमारभ्याद्यश्राद्धपर्यन्तं सकलं कर्म समाप्य मातुरपि शय्यादानादिपूर्वकं श्राद्धपर्यन्तं सकलं कर्म क्रियत इति साम्प्रदायिकाः । युक्तं चैतत्, द्वयोरधिकारस्य तुल्यत्वेऽपि मातृसपिण्डनप्रयोजकतया प्रथमं पितुरेव विसर्जनीयत्वात् । न चैवं 'दानं निष्फलतामेति' इति वचनविरोधः, प्रकृते दानस्य निरवकाशत्वात् । कार्त्तिक्यामपूपदानवत् । न चैवं मलमासवच्छय्यादानादिबाध एवास्तु, निषेधविधेः सावकाशविषयत्वात् । अन्यथा श्राद्धोदीच्यमानस्यापि बाधापत्तेः । सङ्कुसुकास्तु पितुः शय्यादानादिवृषोत्सर्गान्तं कर्म समाप्य मातुः शय्यादानादिवृषो

त्सर्गान्तं कर्म सम्पाद्य पितुरेकादशाहश्राद्धम्, ततो मातुरिति क्रममादिशन्ति। तत्र च श्राद्धपूर्वदत्तायाः शय्यायाः श्राद्धोत्तरविनियोगदर्शकेन 'मुहूर्तं तत्र विश्रम्य निवासस्थानमागतः' इति बोधितानन्तर्येऽनङ्गव्यवायापत्तेरिति। अपरे तु पदार्थानुसमयवत्प्रत्येकदानमुभयत्र, ततः श्राद्धद्वयाचरणमिति वदन्ति। तदयुक्तम्, नैकस्मिन् कर्मणि वितते तदसमाप्य कर्मान्तराचरणमिति।

साग्निभ्यामौरसक्षेत्रजाभ्यां मृताहे पितुस्त्रिपिण्डकं सविश्वदेवकं पार्वणमेव कार्यम्, इतरैस्तु दशभिरपि पुत्रैः साग्निभिरनग्निभिरपि तत्रैकोद्दिष्टमेव कार्यम्।

यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम्।
पार्वणेन विधानेन देयमग्निमता सदा॥

इति मत्स्यपुराणात्।

औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश॥

इति जाबालिवचनाच्च।

चण्डेश्वरस्तु साग्निनिरग्निभ्यां मृताहे पार्वणविधिनैकोद्दिष्टमेव कार्यम्। "विधिना पार्वणेन तु" इति श्रुतेः, प्रधानस्यातिदेशासम्भवात्। अन्यथा तादात्म्यादति देशानुपपत्तिः। अपुत्रस्य तु सर्वस्यैव स्त्रीपुंससाधारणस्य साग्निना निरग्निना वाऽविकृतमेकोद्दिष्टं श्राद्धं कार्यम्—

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्॥

इति वचनादित्याह, तदेतच्चिन्त्यम्। 'औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु' इत्युक्तवचनेनौरसक्षेत्रजातिरिक्तानामेकोद्दिष्टविधानसामर्थ्यादौरसक्षेत्रजयोरर्थात् त्रिदैवतमेव श्राद्धं पर्यवस्यति। न चाविकृतमात्रविधिरयम्, तात्पर्यगौरवात्।

शङ्खः—

सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते।
तत्र तत्र त्रयं कुर्याद् वर्जयित्वा मृताहनि॥
अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः।
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः॥

अत्र प्रथमवाक्येन पित्रादित्रिकश्राद्धं सपिण्डीकरणोत्तरं विधाय 'स एव मृताहनि' इत्यनेन मृताहे निरग्निकर्तृके प्रतिषिद्धयते, तदेवापरपक्षमृतस्य द्वितीयवाक्ये प्रतिप्रसूयते। अत एवामावास्यादौ स्त्रीमरणेऽपि न तस्याः पार्वणविधिना श्राद्धम्, तत्र प्रथमवाक्येन त्रिकश्राद्धस्याविहिततया प्रतिप्रसवासंभवात्। एवं चामावास्यापरपक्षमृतस्यापि पितुः पुत्रेण त्रिपिण्डकमेव श्राद्धमाचरणीयम्, अन्यस्याविकृतमेकोद्दिष्टमिति प्राञ्चः, तच्चिन्त्यम्। तत्र तस्येत्येकवचननिर्देशादेकदैवतमेव श्राद्धम्, अत एव पितुरन्यस्य स्त्रियाः पुरुषस्य वा तदानीं मरणे आवाहनादिपार्वणेतिकर्तव्यतया सवैश्वदेवमेकोद्दिष्टमेव कार्यम्, क्षयो यस्येति वाक्यलिङ्गात्। न चात्र

पुंलिङ्गनिर्देशात् स्त्रीणामविकृतमेकोद्दिष्टं स्यादिति प्रथमवचनस्योद्देश्यमात्राकांक्षाप्रवृत्तत्वेन युवान इतिवत् लिङ्गविशेषतात्पर्याभावाच्च । किं च पार्वणो विधिरित्यत्र पार्वणेतिकर्तव्यतैवातिदिश्यते, पुरुषान्तरश्राद्धं तु प्रधानमित्यतस्तन्नातिदिश्यते, प्रधानस्य क्वाप्यनतिदेशात् । एकवचनानुपपत्तेश्च । अत एव मृतस्येत्यनुवृत्तौ स्मृतिः—

अमावास्यायां प्रेतपक्षे पितुः कुर्वीत पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ॥

इति प्रेतपक्षेऽमावास्यायां वा मृतस्य पितृव्यादेरपि न पार्वणविधिना श्राद्धमिति शत्रुघ्नोपाध्यायाः । पार्वणप्रतिप्रसवत्वेऽपास्ते स्त्रिया स्त्रियै चावाहनादिमदेव कार्यम् । अत एवामावास्यादिमृतपतिश्राद्धमेवमेवेति प्रतिहस्तका अप्याहुः । अन्यथात्वे तद्वचनस्य पार्वणप्रतिप्रसवार्थकत्वेऽपुत्रमृतस्य पार्वणानर्हत्वे प्रतिप्रसवाभावादविकृतमेकोद्दिष्टं स्यादिति । साग्न्यौरसक्षेत्रजकर्तृके क्षयाहश्राद्धे पार्वणस्य तदतिरिक्तसाग्निनिरग्निकर्तृकेऽपि त्रिपिण्डकमेव श्राद्धमिति, तदसत्; 'वर्जयित्वा मृताहनि' इत्यनेन प्रतिप्रसवस्य कण्ठत एवोक्तत्वात् ।

वस्तुतस्तु एककर्तृकत्वेऽपि प्रथमौ विधिनिषेधावेव वर्जयित्वा 'मृताहनि' इति श्रुतेः । तृतीयस्तु स्वतन्त्रो विधिरेव, प्रतिप्रसवार्थकत्वे 'सपिण्डीकरणादूर्ध्वम्' इत्यस्य वैयर्थ्यापत्तेः, प्रथमवाक्येनैव सपिण्डीकरणादूर्ध्वमित्यादिना तदर्थस्य कण्ठत एवोक्तत्वात् । तथा च यस्य यस्येति समभिव्याहारबलादुद्देश्यमात्राकांक्षाप्रवृत्तत्वेन लिङ्गविशेषे तात्पर्याभावाद्युवान इतिवत् प्रधानस्यातिदेशासंभवात्, तादात्म्यातिदेशानुपपत्तेः स्त्रिया स्त्रियै चावाहनादिमदेवैकोद्दिष्टं कार्यमिति वज्रलेपायितम् ।

भ्रान्तास्तु स्त्रिया अपुत्रपुंसोऽपि चापरपक्षमृतस्याविकृतमेकोद्दिष्टं न तु पार्वणेतिकर्त्तव्यताकम् ।

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥

इति सामान्यनिषेधात् । किं च 'सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः' इति शङ्खवाक्ये विधिनिषेधप्रतिप्रसवानामेकविषयत्वेन सुतरामिति वदन्ति ।

एवमेकविषयत्वेन सपिण्डीकरणादूर्ध्वमित्यस्य वैयर्थ्यापत्तेः, एककर्तृकत्वेन प्रथमत एव तस्य प्राप्तत्वात् । तेन तृतीयः स्वतन्त्रो विधिरेव । तथा च स्वतन्त्रविधिबलादपुत्रस्य पुंसः स्त्रियाश्च पार्वणेतिकर्त्तव्यताकं वैश्वदेवपूर्वकमेकोद्दिष्टं निरपवाद इति । अत एव सामान्यनिषेधोऽपि भिन्नविषय एव, सामान्य विशेषन्यायात् । वस्तुतस्तु तस्य पार्वणनिषेधकत्वेनैकोद्दिष्टविधायकत्वेन चास्य त्वदुक्तशङ्काऽपि नास्तीति दिक् ।

'अशौचान्ताद् द्वितीयेऽह्नि' इत्यत्र प्रकृतशावाशौचान्तपरतैव, तेन जननाशौचान्ते, रजोयोगाशौचान्ते, व्यधिकरणाशौचान्ते वा नातिप्रसङ्गः । अत एव खण्डाशौचान्तेऽपि तद्दानम् । अत्र च द्वितीयत्वमविवक्षितं पक्षप्राप्तं वानूद्यते शौचस्यैवाधिकारार्थमपेक्षितत्वेन तन्मात्रस्यैव वक्तव्यत्वात् । अन्यथा नियमादृष्टकल्पनापत्तेः । अत एव सद्यः शौचेऽपि विहितमुहूर्तलाभे शय्यादिदानं श्राद्धं चेति युज्यते, शुद्धयुत्तरविहितमुहूर्तकर्तव्यतायास्तत्राप्यक्षतेः । तत्राशौचव्यपगम इत्येव प्रयोगः कार्यः, 'अशौचव्यपगमे' इति विष्णुसूत्रात् । अत्राननुगमस्यादोषत्वादिति ।

कस्याश्चित्तिथौ प्रमितस्य सा चतुर्थी यदि मध्याह्ने व्याप्यते, तदा तस्यामेव त्रिपक्षे सपिण्डीकरणं निष्प्रत्यूहम्। मासिकानि सर्वाणि तद्दिन एव, ततः प्राक् तदन्तापकर्षन्यायात्तत्र न प्रायणतिथिनियमो हेत्वभावात्। एष एव त्रिपक्षार्थः, न तु मासत्रिपक्षादौ संख्याग्रहः, तिथ्यावृत्तिग्रह इति सुव्यक्तमेव। एवमेव षण्मासादिसपिण्डनेऽपीति।

"संवत्सराभ्यन्तरे यद्यधिमासपातो भवेत्तदा मासिकार्थं दिनमेकं वर्द्धयेत्" इति विष्णुसूत्रे संवत्सरपदस्यैकादशमासपरत्वे आश्विनशुक्लप्रतिपन्मृतस्याग्रिमभाद्रस्य मलमासत्वे कृष्णादि-भाद्रामावास्यायामेकादशमासाः पूर्यन्ते, शुक्लादिस्तु सकल एव भाद्रो मलमासो भवति, तथा च तत्रैकादशमासपर्यन्तं न कुत्रापि मलमासः प्रविष्टः, तेन तस्यां द्वितीयभाद्रशुक्लप्रतिपदि शेष-मासिकं सपिण्डनं सांवत्सरिकं च स्यात्। तथा च तत्र मरणमासोल्लेखासंगतिः, न हि कयापि रीत्या आश्विनशुक्लपक्षो भवति, तेनोल्लेखानुरोधेनैकादशमासाभ्यन्तर इत्यस्यैकादशमासिक-कालाभ्यन्तर इति विवक्षयोल्लेखः संगच्छते। एवं च क्वचिद् द्वादशो मासो मलमासो भवतीत्यत्र द्वादशमासात्यये मलमासो भवतीत्येवार्थः, अन्यथा प्रकृतविरोधः स्यात्। अत एव——

संवत्सरातिरेको वै मासश्चैव त्रयोदशः।
तस्मात् त्रयोदशे श्राद्धं न दद्यान्नोपतिष्ठते॥

इति ऋष्यशृङ्गोऽपि कण्ठत एव द्वादशमासात्यये मलमासपाते श्राद्धाभावं ब्रूते। एवं च 'असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं बुधैः' इत्यत्रापि द्वादशमासात्यये त्रयोदशे मासि मलमासपाते शेषमासिकं सपिण्डनं सांवत्सरिकं चेत्येवार्थ इति दिक्।

मलमासवत्यपि वर्षे ऊनवार्षिकानन्तरं द्वादशमासिकाचरणम्। ननु 'द्वादशमासाः संवत्सरः' ततो 'दशमासाः संवत्सरः' इति श्रुतेः। यथा——

त्रयोदशं तु श्रुतिराह मासश्चतुर्दशः क्वापि न दृष्टपूर्वः।
एकत्र मासद्वितयं यदि स्यादब्देऽधिकं तत्र परोऽधिमासः॥

इति स्मृत्यन्तरे तद्वर्षस्य त्रयोदशमासात्मकतया द्वादशमासिकानन्तरमेवोनवार्षिकाचरणम् 'न्यूनाः संवत्सराश्च' इति वचनादिति चेन्न; 'षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः' इति वचनात्, "द्वादशैव समाख्याता मासाः संक्रान्तिकल्पनाः" इत्यादेश्च। तत्रापि वर्षस्य द्वादशमासात्मकत्वे सिद्धे श्रुतेः स्मृतेर्वा ईदृशो मासो भवतीत्यत्रैव तात्पर्यात्। हन्तैवं मासिकेऽपि त्रिंशत्तिथ्यात्मकस्यैव मासस्योपादानाद् वर्षस्यापि तन्मासघटिततया त्रयोदश-मासात्मकत्वं वर्षस्य गणनासिद्धमिति चेत्, एतावताऽपि विष्णुसूत्रानुसारेण संवत्सराभ्यन्तरे मलमासपाते तथा गणनया शेषमासिकाचरणं सपिण्डनं वा सिद्ध्यतु, न तु वर्षस्यापि त्रयोदश-मासात्मकत्वम्, संवत्सराभ्यन्तर इति विष्णुसूत्रविरोधात्। "संवत्सरातिरेको वै मासश्चैव त्रयोदशः" इति वाक्यं सकलैकवाक्यतयाऽन्त्याधिमासपक्षे त्रयोदशमासिकनिषेधेन त्रयोदशमासस्य संवत्सरबहि-र्भूतत्वेन संवत्सराभ्यन्तर इति सूत्रस्य विवक्षितविवेकेन एकादशमासिकदिनाभ्यन्तरे मलमासपाते सप्तदशश्राद्धबोधकेन एकादशमासाभ्यन्तर इत्यर्थकेनोभयत्रापि त्वदुक्तशङ्कानवतारात्। प्रतिमासिक-करणपक्षे एकाहोने त्वित्यादिबोधितस्थानिकक्रमानुरोधेन द्वादशमासिकाचरणमिति ध्रुवम्।

अत एव त्रयोदशे मासि पूर्णे शेषमासिकं सपिण्डीकरणं वार्षिकं च तद्वर्षस्य त्रयोदश-मासकत्वादिति सर्वसिद्धम्। 'संवत्सराभ्यन्तरे यद्यधिमासपातो भवेत्' इति विष्णुसूत्रे मासिक-

विशिष्टदिनविधौ विधेये गौरवं मासिकमात्रविधौ लाघवम्। किं च—'द्वादशाहेन वा पूज्याः' तथा 'नार्थवद् द्वादशाहं कृत्वा' इत्युभयत्र त्रयोदशेऽह्नि द्वादशेऽह्नि इत्यत्र सर्वत्र सङ्कोचापत्तेरिति-प्रत्युतरामरणसजातीयतिथौ मासिकद्वयमिति द्वितीयः कल्पः 'अपर्याप्तावृत्तं प्रति' इति मरीचि-वचनात्, तेन षष्ठमासिकाचरणात् प्राक् तद्दिन एव पञ्चममासिकम्, तत ऊनषाण्मासिकम्, ततः षष्ठमासिकम् तदाद्युत्कर्षन्यायाद् वीप्सावलाच्चेति परमगुरवः। अन्ये तु एकाहोने त्वित्यादिवाक्य-बलादूनषाण्मासिकस्यैकाहोनषाण्मासिककर्तव्यत्वे सिद्धे पञ्चमस्यैवापकर्षेणोनषाण्मासिकात् प्रागेव तद्दिनेऽनुष्ठानं मासिके, तदन्तानुरोधेनापकर्षस्य क्लृप्तत्वात्। न तु वीप्सावाधो दोषाय, अनन्य-गतिकत्वादित्याहुः।

परे तु वीप्सावलाद् वीप्सावाधो दोषाय, अनन्यगतिकत्वादित्याहुः। परे तु वीप्सावलात् क्रमभङ्ग एव, तेन पञ्चमात् प्रागेवोनषाण्मासिकाचरणं वचनयोरवाध्यत्वादित्याहुः। तदुभयमपि चिन्त्यम्। एकाहोने त्वित्यादिवाक्यस्य दशाहादिसपिण्डतानुरोधेन प्रतिमासि मासिक-विषयतायाः सर्वैरेव वक्तव्यत्वात्। तेनावश्यसंकोचो लाघवात्, प्रत्युत्तरकल्पे संकोचोऽस्तु, प्रवृत्तेरवैषम्याच्च, न तु वीप्साभङ्गः क्रमभङ्गो वा सर्वथैवाक्लृप्तत्वादिति।

सच्छूद्रेण तु त्रयोदशदिने आद्यश्राद्धं कार्यम्, तदुत्तरदिने मासिकं सपिण्डनं च।

दिनत्रयोदशे प्राप्ते पाकेन भोजयेद् द्विजान्।
अयं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितः॥

इत्याद्यश्राद्धप्रकरणे वराहपुराणात्। उत्तरदिनस्य स्वजात्युक्ताशौचान्तत्वादिति। 'कृत्स्नेनाप्यन्त्यजन्मनः' इत्यत्र योगशक्त्यैवान्त्यजन्मपदं त्रैवर्गिकापेक्षया चरमजातशूद्रादिपरम्, अतः संकरजातीयानामप्यधिकारो निरावाध एव। अत एवान्त्यजन्मस्त्रीणामनधिकारः, लिङ्गस्य विवक्षितत्वात्, अन्यथा 'अमन्त्रा हि स्त्रियो मताः' इत्यत्रापि संकोचापत्तेरिति।

मत्स्यपुराणे—

चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः।
लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत्॥
वृष एव स मोक्तव्यो नैव धार्यो गृहे भवेत्।
तदर्थमेषा चरति लोके गाथा पुरातनी॥
गौरीं वाप्युद्वहेत् कन्यां नीलं वा वृषमुत्सृजेत्।

एवं वृषं लक्षणसन्नियुक्तं गृहोद्भवं क्रीतमथापि राजन्।
मुक्त्वानुशोचेन्मरणं महात्मा मोक्षे गतिं चाहमितोऽभिधास्ये॥

चरणानीति चत्वारि चरणानि मुखं पुच्छं यस्य श्वेतानि शरीरं लाक्षारसवर्णं स नीलो वृषो गृहे न धार्यः, किन्तु मोक्तव्य एव। एवकारो भिन्नक्रमः, 'गृहोद्भवं क्रीतमथ' इत्यभिधानात्। अस्यैवोत्सर्गे मोक्षः फलम्, न तु वृषान्तरस्य। इममेवोपक्रम्य 'एवं वृषं लक्षणसन्नियुक्तम्' इत्यनुपदमेवाभिधानात्। एवं च द्वैतनिर्णयफक्किकायां मोक्षश्च नीलवृषोत्सर्गे तत्तल्लक्षण-वृषोत्सर्गे वेत्यत्र मोक्षः फलमिति योजना। चकारोऽवधारणार्थः, अव्ययानामनेकार्थत्वात्, न तु विभिद्य, मत्स्यपुराणविरोधात् स्वकथितविरोधाच्च।

वृषोत्सर्गे कातीयकल्पे होतृदक्षिणा न श्रूयते, तथापि 'होतुर्वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च' इति विष्णुस्मृतौ कण्वशाखायां दर्शनात् सैव कातीयकल्पेप्यन्वेति, सर्वशाखाप्रत्ययेकं कर्मेति न्यायात्। अत एव वृषोत्सर्गे यजमान एव होतेति पाश्चात्यमतमपास्तम्, तथा सति श्रुतदक्षिणाबाधापत्तेः। किं च शूद्रस्यापि यजमानत्वोपदेशात्। न चैवं त्रैवर्णिके यजमाने दक्षिणाबाधोऽस्तु, शूद्रे यजमाने दक्षिणान्वय इति वाच्यम्, 'होतुर्वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च' इत्यत्र होतृपदे निर्बीजलक्षणापत्तेः। अथ 'प्रधानं स्वामी' फलयोगात्, गुणः प्रतिनिधिः परार्थत्वाद्' इति परिभाषाबलादस्तु यजमान एव होतेति। प्रधानं प्रधानकर्मणि स्वामी अधिकारी फलयोगात् फलसम्बन्धादिति तदर्थादिति। भ्रान्तोऽसि गुणे परार्थत्वादिति परिभाषा-शेषाद् गुणे होमादौ प्रतिनिधिर्ऋत्विगादिः, परार्थत्वात्। होमस्य देवतार्थत्वादिति। एतच्च कर्म कार्तिकीरेवतीचैत्र्याश्वयुजेषु कार्यम्। एतच्चतुष्टयं प्रथमाब्दातिरिक्तमिह ग्राह्यम्, प्रथमवर्षे 'तथैव काम्यं यत्कर्म वत्सरात्प्रथमाद्दृते' इत्यनेन निषेधात्। अथ वृषोत्सर्गो यज्ञेन व्याख्यातः।

कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुजस्य मध्ये गवां स्वसमिद्धमग्निं कृत्वेति कात्यायनसूत्रात् रेवत्यामाश्वयुजमध्य इत्यत्र सामानाधिकरण्येनान्वेति वृषत्रितयमित्येवार्थ इति दिक्।

अथ चैत्र्यां वृषोत्सर्गः कार्तिक्यां वा प्रयत्नतः।
कर्तव्यस्त्वथ रेवत्यां त्रिभिर्वर्णैर्द्विजातिभिः॥

इति वचनात् केवलाया अपि रेवत्यास्तत्कालत्वसिद्धेरिति चेन्न तद्वचनैकमूलकतानुरोधेन सामानाधिकरण्येनान्वयस्य शास्त्रार्थत्वात्। अथ वृषविशेषोपदेशादन्यथानुपपत्त्या शूद्रस्याविद्यत्वेऽपि रथकारवदधिकारः कल्प्यते, न तु तद्वदेव सकलाङ्गानुष्ठानकल्पनापि, विध्यभावेन निजाङ्गकरण-विषयकापूर्वविधानात्। वृषोत्सर्गं कुर्वीतेति विधेरविद्यत्वेन स्वर्गकामो यजेतेतिवत् शूद्रादौ संकोचात्, कल्पितविधेरननुभावकत्वात्। लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव प्रवर्त्तकत्वा-भ्युपगमेन तस्य चार्थवादादेव संभवात्। विध्यभावस्य चाकिञ्चित्करत्वात्। तस्मात् स्वपूजनमधिकारबलात् सन्ध्यामुपासीतेतिवत् कर्मानुष्ठानं न तु सकलाङ्गानुष्ठानम्। एवं च शूद्रेणापि त्रैवर्णिकवदङ्गीभूतसकलमन्त्रसहित एव वृषोत्सर्गः कर्तव्य इति तु तरङ्गिणीलिखनं सुगतिसोपानानुसारेण, स्वकथितविरोधात् स्वव्यवहारविरोधाच्चेति। सोपानकृता हि प्राभाकरास्तेषां सर्वशक्त्यधिकरणविरोधेन तिर्यगधिकरणविरोधेन च तथा लिखनमिति न किञ्चिदनुपपन्नम्।

ननु वृषोत्सर्गे रात्रिसत्रवदार्थवादिकफलकामस्याधिकारितया तत्संदृष्टदम्पतिपूजासु तदधिकारित्वमेव कल्प्यते लाघवात्, तथा च क्त्वास्य प्रधानत्वमिति वाच्यम्, तदर्थवादस्य विध्यसमभिव्याहृतत्वेन तदानीन्नियतोपस्थितौ प्रमाणाभावात्। न च क्त्वाश्रुतिबलादङ्गत्वम्? क्त्वाश्रुतेस्तत्रासामर्थ्यात्। किन्त्वनुष्ठानैक्यात् पूर्वकालतामात्रमिह तदर्थः। क्व तर्हि क्त्वावरुद्ध-स्याङ्गतावगतिः? यत्र विधिसमभिव्याहृतफलावरुद्धोपस्थितिरिति गृहाण।

एतच्च दम्पतिपूजनमेकादशाहे वृषोत्सर्गाकरणेऽपि कार्यं प्रधानत्वात्। तदानीमेतदकरणे वृषोत्सर्गाकरणं न तु तदकरणेप्येतदकरणमिति केचित्तन्न, क्त्वाबलात् पूर्वकालप्रतीतेरधिष्ठानैक्या-दुभयोरपि प्राक् प्रध्वंसावच्छिन्नकालकर्त्तव्यत्वसिद्धेः। न च दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र व्यभिचारः? तस्यापि पक्षसमत्वादिति।

तन्मात्रं परिक्लिष्टं तन्मात्रं यथोपकरणरहित'मिति हारीतवचनाद्यथोक्तकपिलाया अलाभे केवलापि कपिला न देयेति वृद्धास्तच्चिन्त्यम्। काम्ये हि विशेषणासिद्धौ फलासिद्धिरेव, तथैव तिर्यगधिकरणेऽभिधानात्। कथं तर्हि प्रेतषोडश्यां श्राद्धियब्राह्मणस्याभावेऽपि फलसिद्धिः, तस्या आवश्यकत्वात्। तथैव सर्वशक्तावभिधानात्। 'परिक्लिष्टमित्यादिना तिर्यगधिकरणविरोधेन तादृशदानस्यैव निरस्तत्वादिति। स्त्रीशूद्रयोरविद्यत्वेऽपि—

अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमर्थं लभेत च॥

इत्याद्यनेकवचनात् प्रधानाधिकारे सिद्धे तदङ्गमन्त्रान्वयोऽप्यस्तु, प्रधानाधिकारबलात्। अधिकृताधिकारादङ्गस्य रथकारवदिति चेत् 'न शूद्रो मन्त्रवत्कुर्यादनेन विधिना नृप' इति मत्स्यपुराणात् शूद्रकर्तृकप्रयोगे वैदिकमन्त्रस्यानङ्गत्वव्यवहारात्। अत एव कर्मप्रदीपे—

एष एवागृहीताग्नेः प्रेतस्य विधिरुच्यते।

'स्त्रीणामिवाग्निदानं स्यात्' इति कात्यायनेनापि दृष्टान्ततयोपात्तम्, तत्र स्त्रीणामेवेति।

अस्मात्त्वमभिजातोऽसि त्वदयं जायतां पुनः।

असौ स्वर्गाय लोकाय स्वाहेति वैदिकेन दाहमन्त्रेण निरग्नेः पर्णनरदाह उक्त इति सकलनिबन्धेषु विवृतम्। स्त्रियोऽनृत इत्युपसंहाराद्वैदिकमन्त्रपरन्निषेधः, न तु पौराणिकमन्त्रेऽपीति तत्त्वम्। अत एव चातुर्वर्ण्येषु संस्कार एवं भवतीति वराहपुराणमपि संगच्छत इति वदन्ति।

मत्स्यपुराणम्—

शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना नृप। इति।

वराहपुराणम्—

अयं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितः। इति।

मनुरपि—

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मो व्यवस्थितः।

विष्णुरपि—

मासिकार्थवद् द्वादशाहं कृत्वा त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यान्मन्त्रवर्जं शूद्राणां द्वादशेऽह्नीति। गोतमोऽपि 'अनुज्ञातोऽस्य नमस्कारो मन्त्रः' इति। नरसिंहपुराणम्—

ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते।
तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम्॥

एवं च नानास्मृतिपुराणपर्यालोचनया स्त्रीशूद्रयोः पौराणिकमन्त्रेऽपि नाधिकारो लाघवात्। अत एव पुराणाधिकारे भविष्यपुराणम्—

अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन॥

इति प्राच्याः ।

मैथिलास्तु स्त्रीशूद्रयोरविद्यत्वेन सर्वत्र श्रौत्रमन्त्रनिषेध एव, न तु पौराणिकमन्त्र-निषेधोऽपि अश्रौतत्वात् । अत एव 'शूद्रः सुखमवाप्नुया' दिति भारतवचनमपि संगच्छते । न च श्रवण एव तदन्वयः ? संकोचापत्तेः ।

वस्तुतो भविष्यपुराणं यदि समूलं तदा मैथिलानां निबन्धोपष्टब्ध आचारः शरणमिति ।

नव्यास्तु भारतसंवादाच्छ्रुतित एव शूद्रस्य दण्डोपदेशादविद्यत्वेन स्त्रीशूद्रयोर्यागेऽन-धिकाराद् भविष्यपुराणीयवचनस्यामूलकत्वात् सकलनिबन्धानुगृहीताचाराच्च स्त्रीशूद्रयोः पौराणिकमन्त्रेऽधिकार एवेत्याहुः । "अमन्त्रस्य तु शूद्रस्य विप्रा मन्त्रेण गृह्णते" इत्यत्रामन्त्रस्येति विशेषणोपादानात् स्त्रीकर्तृकेऽपि ब्राह्मणैरेव मन्त्रः पठनीयः न्यायसाम्यादितिकेचित्तन्न शूद्रायेति श्रुतेर्वैयर्थ्यापत्तेः । अत्रापि कुतः ? इति वाक्यशेषात् गन्धादिग्रहण एव मन्त्रान्वय इति केचित्तन्न असंकोचात्, सर्वत्रैव तत्पाठस्य युक्तत्वात् । एतद्वचनमप्याद्यश्राद्धबोधकमेव प्रकरणादिति ।

"पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते" इति कात्यायनसूत्रात्, तथामुष्यं श्राद्धं मासि मासीति वचनात् सम्वत्सरान्ते सपिण्डनस्य मुख्यत्वमवगम्यते तेन मुख्यकल्पशक्तस्य नानुकल्पाश्रयणम् ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न साम्परायिकं तस्य दुर्मतेर्जायते फलम् ॥

इति सामान्यनिषेधात् । किंच

प्रेतसंस्कारकर्माणि प्रेतश्राद्धानि षोडश ।
यथाकालं तु कार्याणि नान्यथा मुच्यते हि सः ॥

इत्यादिनिषेधात् । मैथिलानां नियमतो द्वादशाहसपिण्डनाचारो भ्रममूलक एवेति गौडास्तन्मन्दम् ।

आनन्त्यात् कुलधर्माणां पुंसां चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥

इति व्याघ्रवचनेन सर्वापेक्षया तस्यैव प्रशस्तत्वात् । न च परमगुरुलिखनविरोधः ? तल्लिखनस्य पक्षापेक्षया वक्तव्यत्वादिति ।

एतत्सपिण्डीकरणमेकोद्दिष्टं 'स्त्रिया अपी'ति याज्ञवल्क्येन सपिण्डनैकोद्दिष्टयोः पृथगुपादानादे-तच्छ्राद्धद्वयं स्त्रियाः स्त्रियैव कर्त्तव्यमिति गौडास्तन्मन्दम्, द्वितीये मातृणां प्रथमं श्राद्धमित्यादि बहुविरोधापत्तेः । प्रथमे त्वनियम एव । हन्त ? तर्हि पार्वणे तस्या अधिकारः स्यात्, नियमाभावा-दिति चेत् ? भ्रान्तोऽसि ? एवं हि स्त्रीमात्राधिकारे—

अपुत्रस्य तु या पुत्री सापि पिण्डप्रदा भवेत् ।

इत्यादिना विशेषविधानानुपपत्तेः । ननु तर्हि तत एव तस्यास्तत्राधिकारोऽस्त्विति चेन्न

दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता ।
अशौचमुदकं पिण्डमेकोद्दिष्टं तयोरपि ॥

इति विशेषविधानपराहतेः। किंच पुत्रपौत्रदौहित्राभावेन पार्वणमित्यापस्तम्बविरोधाच्चेति दिक्।

ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम्।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि॥

अस्यार्थः, नित्यमत्रावश्यकार्यमेकोद्दिष्टं पार्व्वणं च द्वयमेव, सपिण्डीकरणस्योभयात्मकत्वादिति। प्रेतांश एकोद्दिष्टेन पितामहाद्यंशे पार्वणेन तुल्यम् 'शेषम' अवशिष्टमङ्गजातम्। 'एकोद्दिष्टं स्त्रिया अपि' इत्यत्रैकोद्दिष्टपदेनैकोद्दिष्टयोगात् प्राधान्याद्वा सपिण्डीकरणमेवोक्तम्, तच्च 'स्त्रिया अपी' ति, कर्त्तव्यमिति बलातरुकारादयः। श्राद्धविवेके तु एतत्सपिण्डीकरणम् 'एकोद्दिष्टं स्त्रिया अपी'ति याज्ञवल्क्येन सपिण्डीकरणैकोद्दिष्टयोः पृथगुपादानादेतच्छ्राद्धत्रयं स्त्रियाः स्त्रियैव कर्त्तव्यमिति विवृतम्। तेन नैमित्तिकमङ्गभूतं वा वृद्धिश्राद्धं स्त्रिया न कार्यम् प्रापकाभावादिति। तन्मन्दम्। नियमविवक्षायां हेत्वभावात्, प्रत्युत।

अन्वष्टका तथा मातृश्राद्धं चैव मृताहनि।
एकोद्दिष्टं परित्यज्य त्रिषु नान्यत्पृथग्भवेत्॥
अन्वष्टकासु वृद्धौ च गयायां च मृताहनि।
मातुः श्राद्धं पृथक् कुर्यादन्यत्र पतिना सह॥
मातॄणां प्रथमं श्राद्धं पितॄणां तदनन्तरम्।
ततो मातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतम्॥

इति बहुवचनविरोधापत्तेः। अस्तु तर्हि तत एव तत्र विशेषश्रवणादनियमोऽपि, अन्यत्र तत् स्यादेव बाधकाभावादिति चेत्। भ्रान्तोऽसि? उक्तयुक्त्या नियमे निरस्ते तद्विवक्षायां हेत्वभावात्। किं च—

भार्या पिण्डं पतिर्दद्यात् पत्ये भार्या तथैव च।

इत्याद्यनेकवचनात्तासां श्राद्धाधिकारे सिद्धे पार्वणादौ 'पुत्रपौत्रदौहित्राभावे पार्वणं न भव'तीत्यापस्तम्बवचनेन तेषामेव परत्राधिकारे तस्या अनधिकारः कल्प्यते। वृद्धिश्राद्धे तु स्यादेव बाधकाभावात्। अत एव

पिता पितामहो भ्राता सकुल्यो जननी तथा।

इत्यनेन कन्यादातृत्वे तस्याः सिद्धे तत्तन्महादाने च संकोचाभावादधिकारे च निष्प्रत्यूहं तन्नैमित्तिकं तदङ्गभूतं वा वृद्धिश्राद्धं कार्यमेव। 'कर्मण्याभ्युदयिके मंगल्यवति शोभने' इत्यनेन बोधिताङ्गाधिकारस्य प्रधानाधिकारेणाङ्गाधिकारे बाधकाभावादिति।

'पूर्णे संवत्सरे षण्मासे' इति सूत्रेण सपिण्डनापकर्षेपि न मासिकापकर्षो 'यावद्वचनं हि वाचनिकम्' इति न्यायविरोधादिति जीवनाथोपाध्यायः। तदपि हेयम् "सपिण्डीकरणान्ता च ज्ञेया पिण्डक्रिया बुधैः" इति वचनेन सपिण्डीकरणस्य चरमत्वे स्थिते मासिकापकर्षस्य वाचनिकत्वम्। किं च सपिण्डनापकर्षस्य व्यर्थत्वापत्तेः प्रेतत्वविमुक्तेरजातत्वादिति।

मातामहे जीवति पुत्रिकापुत्रेण मातुः सपिण्डनं मातामह्यादिभिः त्रिभिस्सह कार्यम्।

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
यथोक्तेनैव कल्पेन पुत्रिकाया न चेत् स्वरः ॥

इत्यभिधानात्, 'मातामहीप्रमातमहीभिः सहे''ति तद्विवरणात् । मातामहे मृते मातामहादिभिस्त्रिभिस्सह कार्यम् ।

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
पितुः पितामहे तद्वत् पूर्णे संवत्सरे हुतैः ॥
मातुर्मातामहे तद्वदेषा कार्या सपिण्डिता ।

इति वचनात् । अत्र तु पितुः पितामहादीनां सपिण्डनकालात्यये असपिण्डितेनापि पित्रा पितामहादिना वा मातुः पितुर्वा सपिण्डनं कार्यमेव ।

असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥

इति वचनात् । अत्र च पितामहेन पितरमित्यादि सर्वमुपलक्षणमेवाकांक्षायाः सर्वत्र तुल्यत्वात् । पितुः पितामहादीनां सपिण्डनाधिकारसत्वे च तत्कालसत्वे च पितृपितामहसपिण्डनानन्तरमेव सपिण्डनम् ।

ततः प्रभृति वै प्रेतः पितृसामान्यमिष्यते ।
विन्दते पितृलोकं च ततः श्राद्धं प्रवर्तते ॥

इत्यस्य संकोचे हेत्वभावात् ।

प्राच्यास्तु तेषां सपिण्डनकालसत्वेऽप्यसंस्कृतैरेव तैस्सह पितरं संस्कुर्यादविशेषश्रुतेरिति तन्मन्दम् परिशिष्टवचनस्य पितामहादीनामतीतसपिण्डनकालत्वपरत्वादन्यथावाधसापेक्षतापत्तेः । अत एव दैवात्पितामहस्यासपिण्डितत्वे सत्यपि संगच्छते । किं च मललासे शुक्लपक्षे पत्यौ, कृष्णपक्षे भार्यायां मृतायामब्दान्ते विसर्जने प्राप्ते द्वयोर्भार्याया आदौ विसर्ज्जनं स्यात् । एतच्च न, 'पत्युरविसिर्जितत्वा' दित्यादि निबन्धविरोधः स्यात् । तन्मते तस्या अप्यसपिण्डितेनापि भर्त्रा सपिण्डनोपपत्तेः । न चैवमेवास्तु, विशिष्टव्यवहारविरोधादिति । वस्तुतस्तु वचनयोरसपिण्डितश्राद्धविधायकत्वमगत्या तत्र कल्प्यते । प्रकृते तु सपिण्डनानन्तरमपि तत्संभवे बाधसापेक्षतापत्तेरिति ।

अत्र च सपिण्डितानां पितामहादीनां प्रकृतक्रमेणैवोल्लेखः, तदीयप्रेतकृत्य एव तादृशोल्लेखादिति भ्रातृपितृव्यादीनां सपिण्डनं तत्पित्रादिभिस्त्रिभिस्तत्पित्रादिपदेनोल्लिख्य कार्यम् "आसिञ्चेत् प्रेतपात्रेण पितृपात्राणि वस्तुवत्" इति वचनात् ।

कृत्रिमपुत्रेण पुत्रत्वकरस्य सपिण्डनं पुत्रत्वकरपित्रादिभिस्त्रिभिरेव कार्यम्, पुत्रत्वकर्यास्तत्पतिश्वशुरप्रश्वशूभिभिरेव कार्यम्, सर्व्वत्र च जीवन्तं पतितं चातिक्रम्यापरेण त्रिकपूरणं कार्यम्, 'पूर्वेषामेव निर्वपे' दिति वचनात् ।

ब्राह्मणादि हते ताते पतिते सङ्गवर्जिते।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥

इति वचनात्। अत्र पातित्यादिदूषितः सन्न्यासग्रस्तो वा, जीवति वा पिता, तत्रापि मातुः सपिण्डनं पितामह्यादिभिस्तिसृभिरेव कार्यम्, पितृमातृसत्वे प्रमाणवदेव कल्पान्तरव्यवच्छेदात्। 'ब्राह्मणादि हते ताते' इत्यादिना तत्रापि पितामहैकोपक्रमकश्राद्धप्रवृत्तौ फलतोऽत्रापि प्रतिपादनात्। त्रिदण्डिनि पितरि मृते तेनैव सह मातुः सपिण्डनमपवादकाभावात्। दत्तकस्य तु सपिण्डने यस्य दत्तकोऽभूत् तस्मिन्नसति तेन तत्पित्रा तत्पितामहेन तत्प्रपितामहेन त्रिकपूरणं कार्यम् 'व्यपैति ददतः स्वधा' इति वचनात्।

अत्र चतुर्थीहोमात्प्रागेव स्त्रियः प्रायणे सपिण्डीकरणान्तानि तस्याः श्राद्धानि पत्या तत्पितृगोत्रेण कार्याणि, सांवत्सरिकाणि तु स्वगोत्रेणैव।

संस्थितायां तु भार्यायां सपिण्डीकरणान्तिकम्।
पैतृकं भजते गोत्रमूर्ध्वं तु पतिपैतृकम्॥

इति श्रुतेः।

चतुर्थीहोममात्रेण · त्वङ्मांसरुधिरेन्द्रियैः।
भर्त्रा संयुज्यते नारी तद्गोत्रा तेन सा भवेत्॥

इति बृहस्पतिवचनात्।

एकगोत्रत्वमायाति सपिण्डीकरणे कृते।
पत्नी पतिपितॄणां च तस्मात्तद्गोत्रगामिनी॥

इति वचनाच्च। एवं तदानीं पतिप्रायणेऽपि न्यायतौल्याद्विगोत्रयापि भार्यया श्राद्धानि कार्याणीति। परिणीतायास्त्वक्षतयोनेः स्वेच्छयैव द्वितीयपुंसिस्थैर्ये सर्वाण्येवोदकादीनि द्वितीयपतिगोत्रेणैव।

कामादक्षतयोनिश्चेदन्यं गत्वा व्यवस्थिता।
तस्यान्यस्य सगोत्रा सा यन्त्वाश्रितवती स्वयम्॥

इति वचनात्। अक्षतयोनेरेव बलादन्येन ग्रहणे प्रसवपर्य्यन्तं तत्पितृगोत्रेणैव सर्वाणि श्राद्धानि द्वितीयेन पत्या कार्याणि। प्रसवोत्तरन्तु प्रथमपतिगोत्रेणैव।

पदे तु सप्तमे या तु बलात्काचिद्धृता भवेत्।
स्वामिगोत्रं भवेत्तस्यास्तच्च भूयो विशिष्यते॥
पैतृकन्तु प्रसूतायास्ततः पौर्विकभर्तृकम्।

इति वचनात्, यावद्वचनं हि वाचनिकमिति न्यायात्। तदपत्यानान्तु जनकगोत्रतैव वाधकाभावादिति। परिणीतस्त्रियास्तु चतुर्थीहोममन्त्रेण 'पतिगोत्रता ऋक्थगोत्रे जनयितुर्नाहरेद्त्रिमः सुतः' इति वचनात् पित्रा सह मातुः सपिण्डने क्रियमाणे न पितामह्याद्यन्वयः 'स्वेन भर्त्रा सहैवास्याः, सपिण्डीकरणं स्मृतमि'ति विशेषश्रुतेरिति प्राच्याः। तन्मन्दम्।

गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥

ये समाना इति द्वाभ्यामाद्यं तु विभजेत् त्रिधा ।

इत्युक्त्वा 'एतज्ज्ञेयं सपिण्डन'मिति वचनानुरोधने त्रिकश्राद्धस्य वज्रलेपायितत्वात् । न चेदं पितृसपिण्डनमात्रपरम् ? अन्यार्थकतापत्तेः । अत एव—

अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥

इति वचनमपि घटते । किं च—

आदिशेत् प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये तु पितामहम् ॥

इति पुत्रिकापुत्रप्रकरणे कण्ठत एव त्रितयान्वयस्य विहितत्वात्, तस्माद् भर्तृपदं त्रिकोपलक्षकमिति ।

दत्तकस्य तु सपिण्डने यस्य दत्तकस्तमादाय त्रिपुरुषीग्राह्या "तस्मिन् जीवति तत्पित्रा ऋक्थगोत्रानुगः पिण्डो व्यैति ददतः स्वधा" इत्यादि नानावचनस्वरसात् । दत्तकस्य विवाहे वस्तुगत्या यः प्रपितामहादिस्तदानुपूर्वीकमेव वाक्यम् अपवादकाभावात्, किं तु दत्तकस्य गोत्रेण नोल्लेखः "ऋक्थगोत्रे जनयितुर्न्नाहरेद्दत्रिमः सुतः" इति स्मरणात् ।

निषिद्धनक्षत्रे सपिण्डीकरणं न कार्यम् निषेधविरोधात् ।

यथा कालं तु कार्याणि नान्यथा मुच्यते हि सः ।

इति वचनाच्च, तथा चागत्या पितुरपि ब्रह्मपुराणीय एव कल्प इति तत्त्वम् ।

मैथिलास्तु निषिद्धनक्षत्रेऽपि सपिण्डनमाचरन्ति तदयुक्तमुक्तयुक्तेरिति । पक्षपरिग्रहानन्तरं तु निषिद्धकालेऽपि तदाचरणमनन्यगतिकत्वादिति । त्र्यहाशौचे तु चतुर्थदिने आद्यश्राद्धम्, त्रिपक्षादौ सपिण्डनं न तु पञ्चमदिने । सद्यः शौचे तु शुद्धिदिन आद्यश्राद्धं त्रिपक्षादौ सपिण्डनं न तु शुद्धिदिनद्वितीयदिने । एवं क्षताशौचादावपि ।

आन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥

इति व्याघ्रवचनस्याजहत्स्वार्थलक्षणया स्वस्वजात्युक्ताशावाशौचान्ततृतीयाहोपलक्षकत्वादिति सुव्यक्तमेव । सपिण्डीकरणे प्रारब्धे पिण्डात्प्रागेव भक्तव्यञ्जनादौ नष्टे पिण्डदानविभागसंयोजनादिकं विनैव सपिण्डनसिद्धिः, अनन्यगतिकत्वात् । न च पिण्डोऽनुपपद्यकालः पाकं प्रयोजयत्विति वाच्यम् ? पिण्डदानस्याङ्गत्वेन पाकानुष्ठानाप्रयोजकत्वात् । न ह्यङ्गमनुष्ठानप्रयोजकम् । अत एव वाजिनापचारे वाजिहोमलोप एवेति सिद्धान्तः । ननु

निरूप्य चतुरः पिण्डान् पिण्डदः पितृनामतः ।
ये समाना इति द्वाभ्यामाद्यं तु विजजेत् त्रिधा ॥

इति शातातपवचनेन, तथा—

दत्वा पिण्डमथाष्टाङ्गं ध्यात्वा तं च शुभाशुभम्।
सुवर्णरौप्यदर्भैस्तैस्तस्मिन् पिण्डं ततस्त्रिधा॥
सुवर्तुलांस्ततस्तांस्तु कृत्वा पिण्डान् प्रपूजयेत्।

इति ब्रह्माण्डे विशिष्याभिधानात् साङ्गे फलसिद्धिरिति पिण्डाय पुनः पाक इति चेन्न, वाजिहोमेऽप्येवं कुसृष्टिप्रसङ्गादिति।

अर्घार्थं पितृपात्रेषु प्रेतपात्रमासिञ्चति।

इति प्रेतस्य चरमोपदेशात् सपिण्डनेऽपि पितामहादिश्राद्धानन्तरं प्रेतश्राद्धमिति गौड़ास्तन्मन्दम्।

ये समाना इति द्वाभ्यामाद्यं तु विभजेत् त्रिधा।

इति, मुख्यं तु पितरं कृत्वेत्यादिवचनविरोधात्। द्वादशाहिकसपिण्डने कतिपयमासिककरणानन्तरं क्षतेऽशौचे वा जाते न तावन्मासिकाचरणं तदानीमधिकारिविशेषणस्य शौचस्याभावात्। नापि क्षताद्यन्ते शेषसमापनं ऋष्यशृङ्गवचनबलादेतत्कल्पस्यं तद्दिनसपिण्डघटितस्य तथाप्यनिर्वाहात्। हन्त ? तर्हि क्षतादौ सत्यपि तत्सर्वं क्रियतां तत्कल्पस्य परिग्रहादिति चेन्न, तद्गर्भहेतोः संकल्पस्याकरणात्, यथाकालमिति विशेषश्रवणाच्च।

अथ प्रतिमासमासिकाचरण उपक्रान्ते द्वितीयमासिकादौ क्षतादौ जाते यथा तदन्ते करणं तथेदमपि क्रियतामिति ? मैवम् तस्य हि क्षतान्ते करणेऽपि न स्व स्व कालोऽतिक्रामति, तत्कल्पस्य संवत्सरनिर्वाह्यत्वादयं च कल्पो द्वादशाहसमाप्य एव, अत एव द्वितीयतृतीयमासिकादेः क्षतान्ते करणमिति मुख्यः कल्प एवेति प्राञ्चः।

अथ द्वादशाहादिकल्पे क्षतादिदूषिते कल्पान्तरमाश्रीयतामिति चेत् ? न, निरपेक्षैकसाधनावरुद्धे साधनान्तरान्वयस्य विकल्पेन विना असम्भवात्। अत एव यवारब्धप्रयोगे यवापचारे व्रीहिभिर्न्न समाप्यते तेषामर्थतस्त्यक्तत्वात्। विकल्पे चोभयस्यशास्त्रार्थत्वादिति। शातातपः—

नवश्राद्धं ग्रामयाचकान्नं संग्रहभोजनम्।
नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणं चरेत्॥
चान्द्रायणं नवश्राद्धे पराको मासिके मतः।
मासत्रयेऽतिकृच्छ्रः स्यात् षण्मासे कृच्छ्र एव हि॥
आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके।
अत ऊर्द्धं न दोषोऽस्ति शंखस्य वचनं तथा॥

नवश्राद्धं दशाहादिकपिण्डाः, 'नवश्राद्धं दशाहानि' इति वचनात्। नवश्राद्धमेकादशाहाभ्यन्तरे श्राद्धचतुष्टयं च।

चतुर्थे पञ्चमे चैव नवमैकादशे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥ इति।

इदं तु चतुष्टयं ब्रह्मपुराणीयकल्पे नवश्राद्धमस्थिसञ्चयनादर्वाक् अग्निहोतृकर्तृकं श्राद्धम्। तथा—

अस्थिसञ्चयनादर्वागाहिताग्नेर्द्विजन्मनः ।
अयुग्मान् भोजयेद्विप्रांस्तन्नवश्राद्धमुच्यते ॥ इति ।

नवश्राद्धमेकादशाहश्राद्धं च 'चान्द्रायणं नवश्राद्धे' इति तदधिकृत्यैव कथनात्। 'संग्रहे' चन्द्रसूर्योपरागश्राद्धे, 'गर्भे' सीमन्तोन्नयनपुंसवनरूपगर्भसंस्कारके, 'मासिके' एकमास-पूर्त्तिकश्राद्धे, 'मासत्रये' द्वितीयतृतीयचतुर्थमासिकेषु भोजने प्रत्येकमतिकृच्छ्रः प्रायश्चित्तम्। षण्मास इति इतः परं मासषट्के श्राद्धभोजने प्रत्येकं कृच्छ्रः, आब्दिके द्वादशमासिके सपिण्डने च कृच्छ्रपादः, एकाहः पुनराब्दिके भोजने एकाहोपवासः प्रायश्चित्तम्। पुनराब्दिकं तु सपिण्डी-करणोत्तरदिने यत्काम्यमेकोद्दिष्टं तदुच्यते—

पूर्वेद्युराब्दिकं श्राद्धमपरेद्युः पुनराब्दिकम्।

इति मनुवचनात्। एषु एव भोजनेषु श्राद्धेषु शेषान्नभोजनं यजमानस्य निषिद्धं तस्यैव व्रतोच्छिष्टत्वात्। एवं च प्रथमसाम्वत्सरिकेषु भोजनं शेषान्नभोजनं च निषिद्धम्, आब्दिकत्वात्। मैथिलास्तु तृतीयसांवत्सरिकश्राद्धपर्यन्तं श्राद्धभोजनं शेषान्नभोजनं च नेच्छन्ति तत्र न प्रमाणमुपलभामहे, प्रत्युत वस्त्रोपकरणादिविनियोगं निष्प्रत्यूहमाचरन्ति प्रथमसांवत्सरिकेऽपि भक्षणमाचरन्तीति।

सव्रणः सूतकी सूयी मत्तोन्मत्तरजस्वलाः।
मृतबन्धुरशुद्धश्च वर्ज्यान्यष्टौ स्वकालतः॥

इति वचनात् व्रणस्य स्वरूपत एव दूषकत्वमदृष्टोत्पत्तौ बीजाभावात्। अत एव तद्दिने निर्व्रणीभावे श्राद्धाधिकारो निष्प्रत्यूह एव, स्वकालत इति श्रुतेः। एवं च तद्दिनेऽनधिकारा-पादकानि वचनानि निर्मूलान्येवेति दिक्।

सावनमासस्तु द्विधा त्रिंशदहोरात्रनियतः त्रिंशत्तिथ्यात्मकश्च 'त्रिंशद्दिवसस्तु सावनो मासः' इति। तथा—

एका तिथिः कापि तदादिभूता तिथिस्तृतीयेति तिथिप्रबन्धः।

इति ग्राहकयोरविशेषात्। एवं चान्यदपि सावनमासप्रतिरूपकमेवेति निर्णयलिखन-मेकदेशिमतानुसारेण, स्वलिखिनविरोधादेव। यत्तु 'एका तिथिः कापी'त्यादिशक्तिग्राहकाद्दशम्यां पूर्वविधिभूतां तार्तीयकदशम्यां सावनमासो भवतीति गौड़ास्तन्मन्दम्। द्वितीयैकादश्यां तृतीयस्यतु द्वादश्यादिव्रत एकादशतिथ्यधिकेन द्वादशमासे वर्षं स्यात्। किन्नश्छिन्नमिति चेत्? सांवत्सरिके क्षयतिथिचिह्नितत्वबाधापत्तेः। हन्त! तर्हि द्वयात्मकतैवोत्तरतिथेरस्तु, उभयथापि तदादिपदवैयर्थ्यादिति।

'न योषिद्भय' इत्यादेस्तु गोभिलीयानां वृद्धौ गयायां वा कुत्रापि मातॄणां श्राद्धं नेति गौड़ाः। तत्र च

मातॄणां प्रथमं श्राद्धं पितॄणां तदनन्तरम्।

इत्यादिविरोधात् । न चैतानि वचनानि छन्दोगेतरपराण्येव ? एवमुभयत्र संकोचापत्तेः । किं च विशेषविहितातिरिक्तविषयतायाः सर्वथैव वक्तव्यत्वात्, अन्यथोनषाण्मासिकोनवार्षिकयोराद्यश्राद्धस्य बाधापत्तेः । एवं च सर्वत्रासंकोच एव रमणीय इति ।

कृत्रिमपुत्रेण पितृत्वेनैव निर्देशः कर्त्तव्यो न तु मत्पुत्रत्वकरशब्देन, देशनाविरहात् । द्वादशविधपुत्रकर्तृकेऽपि श्राद्धे पितृत्वेनैव रत्नाकरादौ देवतात्वप्रतिपादनात् । "पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया" इत्यत्र पुत्रेण द्वादशविधपुत्रेणेति विवरणात् । ननु चास्य पुत्रत्वेऽपि तस्य पितृत्वाभावान्नैवमिति चेत् ? पितृपदलक्षणायास्तत्रालौकिकत्वेऽपि न्याय्यत्वात् । किं च

तेषां षड्बन्धुदायादाः षड्दायादबान्धवाः ।
पूर्वपूर्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः ॥
क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने ।
ज्यायसो ज्यायसो भावे जघन्यो यो य आप्नुयात् ॥

इति नारदवाक्यादावलौकिकेऽपि पितृपदप्रयोगदर्शनात् । तत्र पितृपदाप्रयोगे क्षेत्रजादीनामपि तत्प्रयोगो न स्यात्, लक्षणायास्तुल्यत्वात् । स्वजन्यपुंस्त्वस्य पुत्रपदशक्यतावच्छेदकस्यावश्यकत्वादन्यथा 'पुत्रप्रतिनिधी'नित्यादिविधिविरोधः स्यात् । वस्तुतस्तु पुन्नामनरकत्राणकर्तृपुंस्त्वं शक्यतावच्छेदकमिति पितृपदलक्षणायाः सर्वथैव वक्तव्यत्वादेवं च यत्र पितैव भ्रात्रादिर्वा पुत्रः कृतस्तत्रापि पितृत्वेनैव निर्द्देशो न तु पुत्रभ्रातृत्वादिना उभयोरपि सन्निहितप्रोषितत्वादिति ।

स्त्रीवैधस्नाने स्वपितृमातृणां तर्पणमविरुद्धमेव, पुरुषषट्कतर्पणयोर्नित्यत्वात् । पतिश्वशुरादीनां च स्वेच्छया काम्यत्वात् ॥ अत एवावतारणीप्रकरणे तथैवाचारोपोत्याहुः । स्त्रीणामपि वैधकर्मणि द्विवासस्त्वम्, तदुक्तं पारिजातहरणे पुष्पकव्रतप्रकरणे हरिवंशे—

शुक्लमेव सदा वासः प्रशस्तं चन्द्रसंभवे ।
अन्तर्वासो परं चैव उपवासे व्रते तथा ॥
नराणामथ नारीणामंशुकद्वयमिष्यते ।
दैवे कर्मणि पित्र्ये च द्विवासस्त्वं प्रकीर्तितम् ॥

अत्र नरपदं शूद्रपरम्, स्त्रीशूद्राणां द्विवस्त्रतामात्रं न त्वपसव्यकरणं तथैव छन्दोगदारकृत्ये प्रतिहस्तकलिखनात् । युक्तं चैतत् यस्यैव सव्यविधिस्तस्यैवापसव्यविधानम्, यथा पुरुषे । स्त्रीणां सव्यविधिरेव नास्तीति कुतोऽपसव्यप्रसङ्गः ? न च तुल्यन्यायतयाऽपसव्यविधानं स्यादिति वाच्यम् एवं हि मुक्तकक्षत्वादेरभावप्रसंगादिति सांप्रदायिकाः । वस्तुतस्तु स्त्रीणामपि स्वधाधिकारे सिद्धे—

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधानात्कार्यं विधिवद्दर्भपाणिना ॥

इति परिभाषाबोधितापसव्यविधेर्निष्प्रत्यूहत्वात् । अत एव व्यवहारोप्येवमेवेति तत्त्वम् ।

"स्वधास्थ तर्पयत मे मत्पुत्रत्वकरीम्" इत्यत्र प्रथमास्मच्छब्दार्थस्यान्यपदार्थे कर्मणि द्वितीयास्मच्छब्दार्थस्य च पुत्रत्वलक्षणे धर्मेऽन्वयान्न कदाचिदनुपपत्तिः 'कृञो हेतुताच्छील्यानु-

लोम्येषु' इति सूत्रेणानुलोम्येर्थे ठप्रत्ययः। टिड्ढाणञित्यादिना ङीप्प्रत्यय इति मत्पुत्रत्वकरी सिद्धयति।

एकोद्दिष्टानन्तरमेव बलिवैश्वदेवकर्मणी कार्ये—

निवृत्य प्रणिपत्याथ पर्युक्ष्याग्निं समन्त्रवित्।
वैश्वदेवं प्रकुर्वीत नैत्यिकं पितृकर्म च।

इति विशेषश्रुतेः। नित्यश्राद्धकरणे तु तत्प्रागेव वैश्वदेवबलिकर्म, 'देवभूतपितृब्रह्म-मनुष्याणामनुक्रमात्' इत्युत्सर्गक्रमविधेः। षट्पुरुषश्राद्धानन्तरं तु नित्यश्राद्धं न कार्यमेव; एकोद्दिष्टान्तरन्तु कार्यमेव—

नित्यक्रियां पितॄणां च केचिदिच्छन्ति सूरयः।
न पितॄणां तथा चान्ये शेषं पूर्ववदाचरेत्॥

इति व्यवस्थितविकल्पश्रुतेः। षट्पुरुषश्राद्धानन्तरं तु नित्यश्राद्धस्य पार्वणेनैव सिद्धिरिति। एकादशाहश्राद्धे कृते सपिण्डने चाकृतेऽप्यन्तरा नित्यश्राद्धं पार्वणं च कर्तव्यमेव, परन्तु पितर-मसपिण्डितमुपेक्ष्य पितामहादिकर्तृकं मातामहादित्रिकं चादाय, अपवादकाभावात्। वृद्धिश्राद्धं तु सपिण्डीकरणाधिकारिणा सपिण्डीकरणात्पूर्वं न कार्यम् "सह पिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः" तथैव कार्यमिति वचनात्, तदनधिकारिणा तु पुत्रोपनयनादौ तदपि कार्यमेव, 'सह पिण्डक्रियां कृत्वे'ति समानकर्तृकताप्रतीतेरिति।

श्राद्धादौ पशुघातो न दोषाय—

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा।
यज्ञश्च कार्यः सर्वस्य तस्माद्यज्ञे वधोऽवधः॥

इति वचनात् दैक्षपशुमालभेतेतिवद् निन्दावचनानि कामचारविषयाणीति तत्त्वम्।

आद्यापूपैस्सदा कार्या मांसैरन्या तथा भवेत्।
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः॥

इत्यत्र 'अपूपैर्ऋद्धिकाम' इति हारीतवचनादपूपप्रधानद्रव्यत्वे प्रधानयोस्समुच्चयस्यानुक्त-त्वेनापूपविधानेन प्रधानान्तरव्यवच्छेद एव वाक्यार्थः। शाकमांसयोस्तु "पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्द्धितम्" इत्युपक्रम्य—

गुणांश्च सूपशाकाद्यान् पयोदधिघृतं मधु।
विन्यस्य प्रयतः सम्यग् भूभावेव समाहितः॥
भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च।
हृद्यानि चैव मांसानि पानानि सुरभीणि च॥
उपनीय तु तत्सर्वं शनकैः सुसमाहितः।
परिवेषयेच्च प्रयतो गुणान् सर्वान् प्रदर्शयन्॥

इत्यन्तेन मनुनैव तयोर्गुणत्वाभिधानात्। गुणप्रधानयोः समुच्चयस्य च शास्त्रार्थ-त्वादत्रैव कण्ठतोऽभिहितत्वात् शाकमांसयोर्गुणत्वेनानयोरयोगव्यवच्छेद एव वाक्यार्थ इति च, अनयोरपि विध्यन्तरानुरोधादिति रहस्यम्। श्राद्धे मत्स्यमांसयोरग्निसाधितयोरेव दानं न त्वामयोरभक्ष्यत्वात्।

यक्षरक्षः पिशाचान्नं मद्यं मांसं सुरां शवम्।
तद् ब्राह्मणेन नात्तव्यं देवानामश्नतां हविः॥

इत्यत्र मनुटीकायां 'मांसमिदमामम्' अभक्ष्यं मद्यादिसाहचर्य्यात्। शूद्रेण तु सर्वथाष्टका-श्राद्धे मत्स्यमांसमाममेव देयम् "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" इत्यतिदेशेन तयोस्तद्दोषनिरासात्। अत एव शिष्टाचारोऽप्येवमेवमेवेति दिक्। रौद्रं पशुमालभेत साण्डं गौर्वेति शूलगवे श्रवणात्॥ तथा—

ततः प्रभृति काकुत्स्थ ? पितरः कव्यभोजिनः।
अफलं भुञ्जते मेषं सफलं न तु भुञ्जते॥

इति रामायणे बलिदानश्रवणात्। मेष एव विशेषश्रवणात् 'क्लीवं हीनाङ्गमथवा विद्धलिङ्गं स्रवत्कफम्, इति पर्युदासात् सर्वत्र हव्ये कव्ये च साण्ड एव छागः प्रशस्त इति दिक्।

देशविधावन्यतः प्राप्त एव नित्यनैमित्तिकादौ श्राद्धे देशरूपगुणविधिः, लाघवात्। 'गोष्ठे दशगुणे' तिवत् न तु विशिष्टविधिः, लाघवात्। विधेयगौरवात् फलमपि देशरूपगुणस्यैव। तद्वदेव गयायां तु द्वादशदैवतश्राद्धविधानादन्यतः प्राप्तेरभावाद्वाक्यभेदेऽप्यगत्या विशिष्टविधि-रेवेति केचित्। पृथग् विधावसान्निध्येन गुणविधानासंभवादगत्या सर्वत्र विशिष्टविधिरेवेत्यन्ये। वस्तुतस्तु—

श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती।

इत्यत्र 'पूजितः' इत्यभिधानात् "विविक्तेषु तु तुष्यन्ति दत्तेनेह पितामहाः" इत्यादेरेक-वाक्यतया प्रकृते लाघवाद् गुणविधिरेव, अत एव 'सोष्णीषा ऋत्विजः प्रचरन्ति लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्राग्रिमवाक्यं लौहित्यरूपगुणमात्रविधायकमन्यथा विशिष्टविधानसंभवे उष्णीषद्वयविधिश्च स्यात्। तस्माद्विशिष्टविधिकल्पने गौरवात् गुणविधिरेव। न चैवं विशिष्टविध्युच्छेदः स्यात् ? अन्यथानुपपत्तेस्तत्र बीजत्वात्। एवं चानन्यथासिद्धव्यापारस्य गुणविधिहेतुत्वे सान्निध्यासन्निध्ययोरप्रयोजकतया वक्तृतात्पर्य्यकल्पने लाघवमात्रस्यैव गमकत्वात्। अत एव गयायामप्यन्यतः प्राप्त एवामावास्यादिपार्वणे गुणविधिरेव, तत्र द्वादशदैवतत्वस्याप्राप्तत्वात्। 'पिण्डदानं तु चैवं स्यात् सर्वस्थानेषु' इत्यनेन तत्र तथा-भिधानादिति दिक्।

सम्यक् ससाधनं कर्म कर्तव्यं कर्मकारिणा।
निःकामेन सदा कार्यं काम्यं कामान्वितेन वा॥

इत्यादिना निःकामेनेति मुमुक्षुविषयम्, तस्यैव कामनाप्रतिषेधात्। कामान्वितेनेति रागिविषयम्। रागिणस्तु कामनोदये क्वचित् "य एता रात्रीरधीयीत तस्य पितरो घृतकुल्यां मधुकुल्यां क्षरन्ते तथा पुत्रो जायेय एतामिष्टिं निर्वपति तस्य पुत्रः पशुमान्वर्चस्वी अन्नादी मेधावी"त्यत्रोभयथाप्यक्लृप्ताधिकारिकतयैव नियोज्याकांक्षायां सकलार्थवादोपस्थापितसमुच्चित-फलकाम एक एवाधिकारी नियोज्यः स्वीक्रियते लाघवान्न विकल्पेन, गौरवादन्यत्राक्लृप्तत्वात्।

यत्र चैकस्मिन्नेव तत्तत्कर्मणि तत्तत्संहितायां तत्तत्फलान्यर्थवादोपस्थापितानि श्रूयन्ते तेषां विकल्पेनैवान्वयः। एवं संहितोपात्तफलेनैवाधिकारलाभसंभवे फलान्तरे निराकांक्षत्वात्। किं चान्यथा तत्तत्संहितायां तत्तत्फलकथनस्य वैयर्थ्यं स्यादधिकारिलाभविरहात्। अत एवं कपलान्येकैकं क्रतव आह्रियन्ते सर्वेभ्यो दर्शपौर्णमासावित्यत्रापि सर्वशब्दस्य प्रस्तुतवाचितया एकैकवाजपेयादिफलस्यैव कामनाविषयत्वेन प्रकृततया तन्मात्रस्यैव फलत्वं योगसिद्धिन्यायादत एव नान्यदैच्छिकमप्रस्तुतत्वात्। न च समुच्चितफलकामनापि, तस्योपस्थापकाभावेनानुपस्थितेः।

किं चाग्निष्टोमादौ तत एवाधिकारिणः क्लृप्तत्वेन समुच्चितफलकामस्याधिकारकल्पने गौरवात्। यागान्तरे प्रवृत्त्यनुपपत्तेश्च। न च वैजात्यस्यैव प्रवर्तकता? तावन्मात्रस्यैव प्रवर्तकत्वात्। ननु तर्हि दर्शपौर्णमासयोर्यागान्तरापेक्षायां वैलक्षण्यानुपपत्तिरिति चेत्? अस्य त्वनिर्धारितफलकत्वमित्येव वैलक्षण्यमिति ब्रूमः। अत एव 'हिरण्यं सर्वकामदम्' इत्यत्रापि दानान्तरोक्तफलानामन्यतमस्यैव फलत्वम्। एवं च

पक्षत्यादिविनिर्दिष्टान् विपुलान् मनसः प्रियान्।
श्राद्धदः पञ्चदश्यां तु सर्वान् कामान् समश्नुते॥

इत्यत्राप्यन्यतमतिथिफलकामनैवाधिकारिविशेषणम्, समुच्चितस्यानुपस्थितेः। अन्यथा प्रवृत्तिस्वाभाव्यात्तिथ्यन्तरेषु प्रवृत्या तद्बोधकवेदस्याननुष्ठानलक्षणमप्रामण्यं स्यादिति तत्त्वम्।

ये तु पक्षत्यादिविनिर्दिष्टानिति समभिव्याहारात् शब्दादेवोपस्थिततया तस्यैवाधिकारिविशेषणत्वममावास्यायामधिकरिसन्देहे तिथ्यन्तरे च प्रवृत्तिरिति वदन्ति तेऽप्यपरीक्षका एव, तथापि 'पक्षत्यादिविनिर्दिष्टानि'ति 'सर्वेभ्यो दर्शपौर्णमासा'वित्यनयोरविशेषात्, सन्देहे च प्रवृत्तौ मानाभावादिति।

ब्रह्मचारिसहस्रेण वानप्रस्थशतेन च।
गृहस्थानां सहस्रेण यतिरेको विशिष्यते॥

इत्यत्र यतिर्योगी 'यतीनि'ति कात्यायनसूत्रात्। सोऽपि त्रिदण्ड एव 'यतिस्त्रिदण्डः' इति मत्स्यपुराणात्। विशेषस्य सामान्यपरत्वे लक्षणापत्तेः। एवं चाधुनिकानामेकदण्डिपात्रकं श्राद्धं चिन्त्यमिति।

अनुपनीतेन त्रैवर्णिकेन श्राद्धे वैदिकमन्त्राः पठनीया एव 'नैनं व्याहारयेद्ब्रह्म स्वधा निनयनादृते' इति मानवप्रतिप्रसवात्। तत ओंकारपूर्वकतापि।

तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः।
प्रवर्त्तन्ते विधानोक्तास्सततं ब्रह्मवादिनाम्॥

इति भगवद्गीतासु यज्ञादिवैदिककर्ममात्र एवोंकारपूर्वकताप्रतिपादनात्। ब्रह्मवादिनामित्यस्य वेदवादिनामित्यर्थकत्वात्। अत एव त्रैवर्णिकेनानुपनीतेन वन्याधिकारिणापि वैश्वदेवहोमो न कार्यः 'न स्त्री जुहुयान्नानुपनीतः' इत्यापस्तम्बसूत्रेण विशिष्य निषेधात्। शूद्रस्य तत्राधिकारो निराबाध एव।

दानं दद्याच्च शूद्रोऽपि पाकयज्ञैर्यजेत च

इति विशिष्याभिधानात् । अत एव सिद्धान्तेनापि तत्करणमबाधितमेवेति दिक् ।

शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम् ।
वैश्यवच्छौचकल्पं तु द्विजोच्छिष्टं च भोजनम् ॥

अत्र च द्विजभोजनानन्तरं शूद्रो भुञ्जीतेत्यर्थः, उच्छिष्टपदस्य शेषेऽपि शक्तत्वात् । अत एव—

प्रेतश्राद्धे यदुच्छिष्टं ग्रहे पर्युषितं च यत् ।
दम्पत्योर्भुक्तशेषं च न भुञ्जीत कदाचन ॥

इत्यत्र 'उच्छिष्टं पाकपात्रेऽवशिष्टम्' इति निबन्धे विवरणम्, न तु द्विजभुक्तावशिष्टम् । कवलाधारपात्रस्थितमेव भुञ्जीतेत्यर्थः । 'उच्छिष्टमगुरोरभोज्य' मिति शातातपविरोधात् 'गुरुः पित्रादि'रिति तद्विवरणात् ।

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविः कृतम् ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥

इत्यादिना मनुना निषेधाच्चेति दिक् ।

नित्ये तु पार्वणादावाचारपरिप्राप्तं संकल्पवाक्यं प्रयोक्तव्यमिति प्राञ्चः ।

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

इत्येत्रापाततः संकल्पवाक्ये प्रमाणमिव दृश्यते, तथाप्येतद्वाक्यस्य राजाद्यलिखितत्वादप्रमाणत्वमिति तेषामाशयः । समूलत्वे वा क्रममात्रविधायकतैव, श्रुतत्वात् । वस्तुतस्तु

अतः संवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् ।
मासचिह्नं तु कर्तव्यं पौषमाघाद्यमेव हि ॥

इत्येव प्रमाणम्, संकल्पं विना मासचिह्नितत्वानुपपत्तेः । ननु सांवत्सरिके भवत्वेवम्, पार्वणे तु कथं स्यात् ? न्यायतौल्यादित्यवेहि, किं च तस्य चान्द्रमासकर्तव्यत्वे नियते तत्रापि पूर्ववदाकांक्षोदये तन्निर्देशस्यावश्यकत्वेन । अत एव—

मासपक्षतिथीनां च निमित्तानां च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥

इत्यपि संगच्छते । काम्ये तु सर्वत्र संकल्पः सकलसिद्ध एव 'मन्वादौ च युगादौ च मासत्रयफलं लभेत्' इत्यादौ सर्वत्र निमित्तमात्रस्यैव फलसमर्पकत्वं यत्र, तत्र तन्मात्रनिर्देशः, न तु मासादेरपि प्रयोजनाभावात् । अत एव 'अद्य राहुग्रस्ते दिवाकरे' इत्येव शिष्टानां प्रयोग इति । सन्न्यासिकर्तृकं श्राद्धं नात्मीयं किन्त्वात्मननः ब्राह्मणसंप्रदानकत्यागवदतो न तिर्यंगधिकरणविरोधः । अत एवात्मने परमात्मने जीवात्मने नम इत्येव प्रयोगः ।

वैश्वदेवविहीनं तदशक्तावुदकेन तु ।

इति । तथा—

तदप्यदैवं कर्तव्यमयुग्मान् भोजयेद्विजान् ।

इत्यत्रोभयत्राप्यप्राप्तदेवश्राद्धनिषेधानुपपत्त्या दैविकान्या पार्वणेतिकर्तव्यताऽतिदिश्यते । दीक्षणीयादिष्वप्रयाज इति निषेधानुपपत्त्या प्रयाजमात्रपर्युदासेन तदितरदर्शपौर्णमास-धर्मातिदेशवत् । तथा हि पार्वणे प्रकृतिभूते पिण्डादिदानं विकृतिभूते नित्यश्राद्धादौ तावान्नि-षिध्यते । निषेधस्तु प्राप्तस्यैव, प्राप्तिस्तु प्रकृतिवद्विकृतिरिति न्यायेन नित्यश्राद्धे पार्वणधर्माति-देशवाक्यबलादेव । अतिदेशश्चांगस्यैव, प्रधानस्यातिदेशासंभवात् । न च विश्वेदेव-श्राद्धमङ्गमेव ।

तेषामारक्षभूतं तु पूर्वं दैवं नियोजयेत् ।
रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् ॥

इति श्रुतेरिन्द्रबाहुबन्धनवदस्य नैमित्तिकत्वात्, प्रधानफलातिरिक्तफलकत्वाच्चेति संप्रदायः । हन्त ! तर्ह्यमावास्यापरपक्षमृतस्याप्येकोद्दिष्टे तस्य बाधः स्यात् ? न स्यात्, 'एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते, इति परिभाषाबलादेव नैमित्तिके कालकामावित्यादिश्रुतेस्तत्सम्बन्धस्य शास्त्रार्थत्वात् । निषेधस्तर्हि कुत्र ? तद्भिन्नेष्विति गृहाण ? अत्र च दृष्टान्तासिद्धिर्दर्शेऽप्रयाजवदिति चिन्तामणिलिखितादिति न वाच्यम्, तस्य मतभेदेनाप्युपपत्तेरिति ।

अपात्रकपार्वणादौ यद्यपि न प्रमाणमस्ति, तथापि नित्ये नैमित्तिके यत्किञ्चिदङ्गहानावपि फलसिद्धिरिति सर्वशक्त्यधिकरणे सिद्धान्तितत्वात् । तथा हि काम्ये लिङ्गकरणविषयकापूर्वा-भिधानात् तत्र च सर्वसंपत्तिरुचितैव । नित्ये तु सन्ध्यामुपासीतेत्यादौ प्रधानमात्रस्यैव विषयीभावप्रतीतेस्तत्राङ्गहानावपि फलसिद्धिरिति तत्रैवोक्तम् । अत एव पात्राद्यङ्गहानावपि पार्वणादीनां निर्विचिकित्सं शिष्टैरनुष्ठानमिति । हन्त ! प्रेतषोडशी तावत्काम्या, प्रेतत्वविमुक्ति-रूपफलश्रुतेः । काम्यापूर्वं च सर्वाङ्गसंपन्नेन कर्मणा जन्यते । अपात्रके च कर्मणि बहुतराङ्ग-हानिस्तस्मात् प्रेतशोडशी सपात्रैव कार्येति । अत्रोच्यते । तन्मतं हि मुनिवचनविरुद्धम् । तथा हि एकादशाहे द्वादशाहेऽथवेति तावन्मुनिवचनम् । तत्र चतुर्दशानां सपिण्डीकरणस्य च सपात्रत्वे सर्वथा न घटते । न ह्येतावान् प्रयोगराशिः सपात्रको रौहिणाभ्यन्तरे रौहिणसमाप्तिपर्यन्तेन वा ब्रह्मणापि कर्तुं शक्यते । तस्मात्तत्रापात्रकत्वे सर्वत्रापात्रकतैवास्तु न त्वर्द्धजरतीयं युज्यते । ननु यावद्वचनं हि वाचनिकमिति न्यायेन तत्र तथास्त्विति चेत् ? न, वाक्यार्थीभूतनियोग-स्यैक्यादिति ।

रामायणे—

ततः पितरमुद्दिश्य ब्राह्मणेभ्यो ददौ धनम् ।
महार्हाणि च वस्त्राणि गां च वाहनमेव च ॥
सुवर्णानि च मुख्यानि राज्ञस्तस्यौर्ध्वदैहिके ।

यद्यपीदं दानं न संभवति, संप्रदानाभावात्। यस्मै प्रतिपाद्यते स न संप्रदानम, कारकत्वाभावात्। संप्रदानस्य कारकविशेषत्वात्। तथाप्युत्सृजन्ति, उक्तदोषेण प्रोक्तदानत्वासंभवात्। रामायणवचनं भूरिदानपरम्। एतच्च भूरिदानं क्षतान्तेऽपि, श्राद्धोत्तरसमयकर्त्तव्यत्वात्। अत्र पितृगतस्वर्गः फलम्, तदनुकूलप्रकरणेऽभिधानात्।

प्राच्यास्तु विश्वजिन्न्यायेन फलकल्पने गौरवादार्थवादिकमेव फलं पितृगतमन्वेतीति वदन्ति। तन्मन्दम् तत्तदार्थवादिकफलस्य स्वकीयफलाकांक्षापूरणाक्षमत्वादिति। यत्र यागादौ विशेषापुरस्कारेण फलमात्रं श्रूयते, तत्र स्वगतफलवत् परगतफलकामोऽप्यधिकारी फलकामितयाधिकारस्योभयत्र तुल्यत्वात्।

ननु स्वरितञितः कर्त्रभिप्राये क्रियाफल इत्यनेन कर्तृगतफलाभिप्राय एवात्मनेपदविधानात्। अत्र च यजन्ति याजकाः पचन्ति पाचका इति प्रत्युदाहरणं वृत्तिकारोप्याह। तथा च स्वर्गकामो यजेतेत्यात्मनेपदं न स्यादिति चेत्? न, इदं सूत्रं हि कर्तृगतक्रियाफलाभिप्राये आत्मनेपदमेवेति विधायकम्? अन्यत्रात्मनेपदनिवर्तकम्? उभयं वा? तत्राद्येऽन्यत्रात्मनेपदं स्यादेवानिषेधात्, 'अस्त्रीकरोति हि जगद्विजये स्मरः स्त्री' रित्यादौ विजयस्य क्रियाफलस्य कर्तृगामित्वेऽप्यात्मनेपदाभावाच्च। न द्वितीयः 'कमलवनोद्घाटनं कुर्वते ये' इत्यादावभावात्।

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः।
यज्ज्वलन्ति हि काष्ठानि तत्किं पाकं न कुर्वते॥

इति भट्टपादैरकर्त्रभिप्रायेऽपि क्रियाफले आत्मनेपदप्रयोगकरणाच्च। अत एव न तृतीयोऽपि। वस्तुतस्तु कर्त्रभिप्राये क्रियाफल इत्यस्य कर्तुरिष्ट इत्यर्थः। तथा चान्यगतफलाभिप्रायेऽप्यात्मनेपदमविकलमेव। प्रत्युदाहरणे तु वेतनमात्रस्याभिप्रेतत्वेन क्रियाफलाभिप्रायस्याप्यभावात्। अत एव नीलं वा वृषमुत्सृजेदिति पितृगतफलबोधकं मत्स्यपुराणमपि संगच्छते। अत एव कर्त्रभिप्रेतक्रियाफलत्वमात्रएवात्मनेपदमिति तत्त्वचिन्तामणिरपि संगच्छत इति दिक्।

'अमावस्यायां पितृभ्यो दद्या'दिति गोतमसूत्रे स्वतन्त्रविधिबलाद्रात्रावपि श्राद्धप्रसक्तौ 'रात्रौ श्राद्धं न कुर्वीते' ति मानवो निषेधः प्रसज्यप्रतिषेध एव, अन्यथा न कुर्वीतेति विधिवैयर्थ्यापत्तेः, पर्युदासापत्तेश्चेति गौड़ाः। तन्मन्दम्। कर्तृभेदेन वैयर्थ्याभावात्, नञः प्रसज्यप्रतिषेधार्थकत्वे वाक्यभेदापत्तेश्च। किं च 'ऊर्द्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्त्तचतुष्टयम्' इत्यादिवचनानां तथा पर्युदासत्रोधकानां गोतमसूत्राणां च सर्वेषामेकवाक्यता स्यादन्यथा त्वदुक्तरीत्या भिन्नभिन्नार्थकत्वे वाक्यभेदः स्यादिति।

कन्यां गते सवितरि यान्यहानि तु षोडश।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम्॥

अत्र षोडश इति तिथिवृद्धिपक्ष एव। यद्वा "श्राद्धं तु प्रौष्ठपद्यां वै कृत्वा क्रतुफलं लभेत्' इति श्रुतेः, प्रौष्ठपद्या सह षोडशत्वम्। केचित्तु कन्याषोडशांशकल्पकाम्यश्राद्धबोधकमिदम्। 'अत ऊर्द्ध्वंन्तु कन्याया यान्यहानि तु षोडशे'ति सूर्यसिद्धान्तादित्याहुः।

अश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने।

इत्यत्र दिनपदं न तिथिपरम्, लक्षणापत्तेः। ननु दिनपदस्य तिथावौपसंदानिक शक्तिरेव। उपसंदानं तु अश्वयुक्कृष्णपक्षे त्वित्यादौ दिने दिने इति। एवं तर्हि अश्वयुक्कृष्णपक्षे नद्यां दिने दिने पितृंस्तर्पयेदित्यत्रापि दिनपदस्य तिथावौपसन्दानिकशक्त्यापत्तेः। किन्नश्छिन्नमिति चेत्? जिधातोर्जयसामान्यशक्तस्य प्रोतरजित्वेन विशेषशक्तिः कल्प्यते फलबलात्। प्रकृते तु दिनतिथ्योस्सामान्यविशेषाभावात्। हन्त! तर्हि प्रस्थित इत्यादौ का गतिः? तत्रापि सामान्यविशेषाभावेऽप्यगत्या धातोरेव तदर्थे शक्तिः कल्प्यते, 'अनेकार्था हि धातवः' इत्यभियुक्तस्मृतेः, लाघवाच्च। उपसर्गस्य तु तात्पर्यग्राहकत्वमित्येवौपसंदानिकीशक्तिः, दिनपदस्य तदुपसन्दानेऽपि तिथिप्रत्यायकत्वाभावात्। किं चौपसन्दानिकीशक्तिर्धातोरेव, सर्वत्र तथैव कल्पनात्, अन्यत्रौपसन्दानिकशक्तेरकल्पनादिति दिक्।

'त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा' इत्यत्र त्रिभागादिविकल्पः शक्त्यपेक्षया, अन्यथा संभवति लघूपाये गुरूपायेऽप्रवृत्तेरननुष्ठानलक्षणमप्रामाण्यं पक्षादिविधेरापद्येत। न चात "एव फलभूमानित्यत्वा" दिति 'अत एवोर्द्धं वा चतुर्थ्यादिहस्संपद्यत' इत्यादि कात्यायन-वचनात् सकृत्करणं तत् पक्षचतुष्टयावरुद्धाश्विनापरक्षविषयम्, ब्राह्मणकौण्डिन्यन्यायात्। ये तु ऋजुयाज्ञवल्क्यवचनानुरोधादाश्विनापरपक्षेऽप्यत्यन्ताशक्तस्य सकृत्करणमाहुस्तदसत् पूर्वोक्त-बाधविरोधादिति। पक्षचतुष्टयेऽपि चतुर्दशीत्यागः।

आहवेषु विपन्नानां जलाग्निभृगुपातिनाम्।
चतुर्दश्यां भवेत्पूजाऽमावास्यायां तु कामिकी॥

इति कन्यागतापरपक्षप्रकरणस्थदेवीपुराणवचनाद्विशेषविधिमहिम्ना शेषविधिसिद्धेरिति प्राञ्चः। नव्यास्तु चतुर्दश्या पार्वणं वज्रलेपायितमेव, प्रथमप्रवृत्तनिरपेक्षाहरहः श्रुत्या तस्य द्रागालिङ्गनात्। विशेषवचनानां तु चरमप्रवृत्तकाम्यविध्यनालिङ्गितचतुर्दशीश्राद्धविषयकत्वात्। "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्" इत्यादिवचनादस्तु तथा तन्निषेध इति चेत्? मैवं 'दिने दिने' इति नित्यविधेर्विशेषविषयत्वेन लघुप्रवृत्तिकत्वात्। मनुवचनस्य सामान्यप्रवृत्तस्य विलंबितप्रवृत्तिकत्वादिति।

"श्राद्धदः पञ्चदश्यान्तु सर्वान् कामान् समश्नुयात्" इत्यत्र सर्वशब्दस्य प्रकृतवाचितया प्रस्तुतस्यैकैकतिथिकफलस्य कामनाविषयत्वेन तस्यैवामावास्याश्राद्धेऽपि फलत्वं न तु मिलितस्य। अत एव "एकैकस्मै फलायान्ये क्रतव आह्रियन्ते सर्वेभ्यो दर्शपौर्णमासौ' इत्यत्रोपस्थितफलेष्वन्य-तमफलं दर्शपौर्णमासयोर्न तु क्रत्वन्तरवन्निर्धारितैकफलवत्वम्, न वा मिलितफलवत्त्वं मिलितानु-पस्थितेरिति सिद्धान्तस्तथेहापीति केचित् तन्न। तत्रैकैकस्यैव प्रकृतत्वेनोपस्थितत्वादस्तु तथा, प्रकृते तु

पक्षत्यादिविनिर्दिष्टान्विपुलान्मनसः प्रियान्।

इत्यादिना मिलितस्यैव दर्शश्राद्धे फलत्वेन प्रतीतेर्न्यायावतारायोगादिति।

भोजङ्गीतिथिमासाद्य यावच्चन्द्रार्कसंभवम्।
तत्रापि महती पूजा कर्तव्या पितृदैवते॥

'ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जये'दिति देवीपुराणम्। भौजंगो पञ्चमी, 'ज्येष्ठपुत्री' विद्यमानज्येष्ठपुत्रकः। अयं तु श्राद्धकरणनिषेध एवेति नाशङ्कनीयम्, पिण्डपदलक्षणापत्तेः। किंतु पिण्डदानमात्रनिषेधस्तत्रापि मघानिमित्तकश्राद्ध एव, न तु तदधिकरणक एव, मघाधिकरणकसपिण्डनादौ तत्पर्युदासापत्तेरिति।

द्रव्यब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः।
व्यतीपातो गजच्छाया ग्रहणं सूर्यचन्द्रयोः॥

गजच्छाया च 'योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः। भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते' इत्यनेनोक्ता। अत्र तृतीयपादोऽर्थवादः। एतच्च श्राद्धं निषिद्धसायाह्नादावपि कार्यमेवेति केचित्तन्न, बाधसापेक्षविध्यापत्तेः, प्रतिप्रसवाभावाच्च। इदं तु गजच्छायाश्राद्धमामान्नेनैव कार्यमिति श्राद्धपल्लवमनादेयम्, अमानकत्वात्। तत्र पाकानिषेधात्।

सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत्॥

इति भोजननिषेधस्य प्रेतश्राद्धभोजननिषेधवत् पाकाबाधकत्वात्।

आपद्यनग्नौ तीर्थे च ग्रहणे चन्द्रसूर्ययोः।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि॥

इति परिसंख्यानरहितत्वाच्च। यावच्चन्द्रगजच्छायायोगस्तावन्न ब्राह्मणेन भोक्तव्यम्, 'सूतके मृतके चैव'इत्याद्युक्तवचनमुक्त्वा 'प्रमादाद्ब्राह्मणस्तत्र भुक्त्वा चान्द्रायणं चरेत्' इति निषेधादतः श्राद्धानधिकारिणस्तत् पूर्वं भोजनमविरुद्धमेव। अत्र च ब्राह्मणपदमुपलक्षणम्,, सूतकादिपदसमभिव्याहारादिति।

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा॥

इति मनुवचनमसंकोचादेव कृष्णपक्षमात्रस्तावकम्। तेनाश्विनापरपक्षेऽपि तिथय एव श्राद्धकालः, एकमूलकतानुरोधादिति भ्रमो हेयः अस्याल्पविषयत्वेन कृष्णपक्षस्तावकत्वाभावात्। न च संकोचात् सकृत्करणस्तावकतैवास्तु? महाविषयत्वात्। तस्मात् कृष्णपक्षान्तरे दशम्यादिकल्पविधायकतैव। अत एव कृष्णपक्षान्तरेऽपि शक्तस्य प्रतिपदादिरशक्तस्य पञ्चम्यादिरशक्ततरस्य दशम्यादिरशक्ततमस्यामावास्यामात्रमिति सिद्ध्यति। हन्त? तर्हि चतुर्दशीपर्युदास एवाश्विनापरपक्षे न स्यात् भिन्नविषयत्वादिति चेत्? भ्रान्तोऽसि? 'रात्रौ श्राद्धं न कुर्वीतेति'वत्पर्युदासे संकोचाभावादिति।

'अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम्'इत्यत्रामावास्यायाः पृथगुपन्यासादाश्विनापरपक्षेऽपि स्वतन्त्रविधिबलात् कल्पान्तरानाचरणेऽपि सामान्यं स्यादेवेति श्राद्धविवेकस्तन्मन्दम्, यथा सकृत्करणविधेरविरोधेन पक्षान्तरविषयत्वं तथा स्वतन्त्रविधेरपीति।

गोतमः—अथ श्राद्धसमयोऽमावास्यायां पितृभ्यो दद्यात्, पञ्चमीप्रभृति वापरपक्षस्य, यथाश्रद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसन्निधौ वा कालनियमः शक्तितः। शक्तिः श्राद्धसामग्री, तदपेक्षानियमः, तेनाशक्तः पञ्चम्यादितोऽप्यकरणेन प्रत्यवायी भवतीत्यर्थः। अत्र च त्रयोदशीश्राद्धमारब्धापरपक्षकेण प्रसंगेन कार्यम्, अन्येन तु स्वातन्त्र्येणेति द्रष्टव्यम्।

केचित्तु अपरपक्षामावास्याश्राद्धमप्येवमित्याहुस्तन्न 'अश्वयुक्कृष्णपक्षे' इति विशेषमुखेन सर्वतिथीनां प्रागलिङ्गनादमावास्यायां पितृभ्यो दद्यादिति सामान्यविधेस्तदितरपरत्वादन्यथा विध्यनुवादवैषम्यापत्तेः, पार्वणकालत्वेनास्याः प्राप्ताया अन्यमासप्राप्तानामालिङ्गनात्।

ननु पक्षविधेरमावा यातिरिक्तपरत्वमस्तु तद्विधेरनित्यत्वेन विनिगमकाभावात् विध्यनुवादवैषम्यापत्तेरविशेषादिति चेत्? उच्यते, पक्षविधेस्तदितरपरत्वे 'दिने दिने' इति वीप्साबाधस्तस्या अशेषानेकव्यक्त्युपस्थापकत्वात्। तथा च वीप्साया प्रागेवाश्विनापरपक्षावच्छिन्नाः कृत्स्ना एव काला विधीयन्ते, अमावास्याविधेरेव तदितरपरत्वमिति सुष्ठूक्तं पितामहचरणैः 'विध्यनुवादवैषम्यापत्तेर्मासि मासि वोशनमित्यस्य सकलकृष्णपक्षपरत्वा'दिति। न च प्रकारभेदान्न दोषः, अप्रयोजकत्वात्, अगृहीतग्राहित्वरूपप्रामाण्यस्य तथाप्यभावादिति।

विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम्।
चतुर्दश्यां भवेत्पूजा अन्येषां तु विगर्हिता॥

इति। घातोस्यास्तीति घाती, तेन श्राद्धार्हत्वे सति विषादिब्राह्मणान्तान्यतमहेतुकमरणवतामित्यर्थः, न तु ब्राह्मण घातकानामित्यर्थः विषादीनामनन्वयात्। ब्राह्मणेन तु परिचीय हतानां तथाविधानामपि श्राद्धं न कर्तव्यम्। अत्र व्याधिना यौवनेऽपि मृतानामयौवनेऽपि शस्त्रादिमृतानामुभयेषामपि चतुर्दश्यां श्राद्धम्, उभयोः पृथगुपादानात्। पुंसः स्त्रियाश्च विशेषाश्रवणात्। न च 'तेषान्दद्या'दिति लिङ्गनिर्देशान्नैवमिति वाच्यम्? उद्देशमात्राकांक्षाप्रवृत्तत्वेन लिंगविशेषे तात्पर्याभावात्।

युवानश्च गृहे यस्य मृतास्तेषां प्रदापयेत्।
शस्त्रेण वा हता ये वै।

इत्यादिषु पुमान् स्त्रियेत्येकशेषे-णापि प्रयोगसंभवाच्च। एकोद्दिष्टविधिना चैतच्छ्राद्धं कार्यम्, चतुर्दश्यां तु यच्छ्राद्धमित्यादेः। अत्र च यथोक्तेऽननुगमापत्त्या रोगव्यतिरेकमृतत्वमनुगमकममीषां प्रयोजकमस्तु। तेन प्रसवमृतायाः कृतपत्यनुमरणायाश्च शस्त्रहतश्राद्धं न त्वग्निमरणेनैव, तत्प्रापितस्य प्रमादादग्निमृतपरत्वात्। न च

न योषिद्भ्यः पृथक्दद्यादवसानदिनादृते।

इति वचनविरोधान्नैवमिति वाच्यम्? सामान्यमुखप्रवृत्तस्य विशेषविध्यालिङ्गितैतच्छ्राद्धविषयत्वात्। अन्यथा पुंसोऽपि न स्यात्।

अर्वाक्संवत्सराद्वृद्धौ पूर्णे संवत्सरे तथा।
ये सपिण्डीकृताः प्रेतास्तेषां तु न पृथक्क्रिया॥

इति निषेधात्। वस्तुतस्तु यावद्वचनं हि वाचनिकमिति न्यायेनात्राननुगमस्यादोषत्वा-दिति। पाश्चात्यास्तु एतन्नवम्यां मातुः पितुश्च मरणतिथिसजातीयतिथावाश्विनापरपक्षे श्राद्धमा-चरन्ति तत्राद्ये देशाचारो मूलम्। द्वितीये—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
मृताहनि पुनर्यो वै श्राद्धं दास्यति मानवः॥
तस्य संवत्सरं यावत् प्रीताः स्युः पितरो ध्रुवम्॥

इति नागरखण्डधृतवाक्यं प्रमाणयन्ति।

अमावास्यायां यत्क्रियते तत्पार्वणमुदाहृतम्।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः॥

अत्रानास्थायां वा शब्दस्तेन विश्वदेवपूर्वकपणमात्रोद्देश्यकश्राद्धत्वं पार्वणत्वम्, अत एव द्वादशदैवते नवदैवते वा गयाश्राद्धे साग्न्यौरसकर्तृकत्रिपिण्डकक्षयाहश्राद्धे वान्यत्र वा नाति व्याप्तिरिति।

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति गीयते।
वैश्वदेवविहीनं तदशक्तावुदकेन तु॥

इत्यत्राहरहः क्रियमाणं यच्छ्राद्धं तन्नित्यमित्येक लक्षणम्। अन्नाद्यभावे तर्पणतोऽपि यस्य श्राद्धस्य सिद्धिस्तन्नित्यमिति द्वितीयलक्षणमेव, न तु द्रव्यविधिरयम्।

य एव तर्पयेदद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम्॥

इति मनुवचनैकवाक्यताबलात्। न च 'दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा' इत्यादि-विरोधः? तत्रापि प्रकृतव्याख्यानेनैव सङ्गतेरिति दिक्

औरसपुत्रिकापुत्रक्षेत्रजदत्तकानां चतुर्णां पार्वणाधिकार इति निबन्धारः। वस्तुतस्तु पारशवस्यापि पार्वणेऽधिकार एव "पितरि दत्तमर्घ्यम्" इत्यादिसूत्रासिद्धसामग्रीसंभवात्।

ब्राह्मणेन न कर्त्तव्यं शूद्रस्य त्वौर्ध्वदैहिकम्।
शूद्रेण वा ब्राह्मणस्य विना पारशवं क्वचित्॥

इत्यादि वचनाच्च। एवं पौनर्भवस्याप्याधिकार एव।

क्लीवं विहाय पतितं या पुनर्भजते पतिम्।
तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः॥

इति वचनात्।

## अथाभ्युदयिककालाः

कन्याविवाहः, पुत्रस्य प्रथमविवाहः, नामकरणं चूड़ाकरणं सीमन्तोन्नयनं नवगृहप्रवेशश्च 'कन्यापुत्रविवाहे चे'त्यादिवचनैकवाक्यत्वात्। यदि तु पिता रोगादिवशान्न करोति, तदा पुत्रवदेवाभ्युदयिकं संस्करणीयपितृवदन्यैरपि कार्यम्। 'अष्टौ संस्कारकर्माणी'त्यादि श्रुतेः। कन्यायाश्च विवाहे कन्यादानकर्त्रा कन्यापितृवच्च करणीयम्. कथितवचनादेव, । पुत्रस्य विवाहे पितृवदन्य-कर्तृकमाभ्युदयिकं नास्त्येव, तद्धि पुत्रविवाहमात्रनिमित्तकम्, तेन पितृमात्राधिकारिकमेव।

अथ 'तस्याभावे तु तत्क्रमादिति' वचनेन पितुरसंकोचान्नामकरणदिवत्पुत्रविवाहेऽपि परकर्तृकमाभ्युदयिकमायातीति चेन्न पुमाँस्त्रियेति सुतसंस्कारेत्यत्र सुतासुतपदयोर्विगृहीतयोरेकशेषे पूर्वपादत्रयार्थान्वियस्य सर्वत्राबाधितत्वात्। चतुर्थपादान्वयस्तु पुत्रविवाहातिरिक्ते सर्वत्र, योग्यता-बलात्। वस्तुतस्तु चतुर्थपादान्वयो न पुत्रविवाहे, प्रापकाभावात्। न हि 'पिता पितामहो भ्राते'ति वचनप्रयुक्तकन्याविवाहवत्परेषां तत्राधिकारः श्रूयते, नामकरणादौ प्रधानाधिकारवदङ्गेऽधिकार बोधनात्। नैमित्तिके तु सुतराम्, अत एवापुत्रस्य कन्याविवाहे तदीयमाभ्युदयिकं कन्यापितृवच्च कन्यादानाधिकारिणा कार्यमिति निबन्धार एकवाक्यतया लिखन्तीति दिक्।

गौडास्तु स्वविवाहे नैमित्तिकमङ्गीभूतं वरकर्तृकमाभ्युदयिकं श्राद्धमिति मन्दम् तथा हि पितरि जीवति मृते वा, नोभयथा प्रापकाभावात्। न च

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मणि।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्॥

तथा—

अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम्।
पिता कुर्यात्तदन्यो वा तदभावे तु तत्क्रमात्॥

इत्येतत्प्रापकमस्तु? एतयोरुपनयनादिवत् संस्कर्तृकर्तृकश्राद्धे क्रमविधायकत्वात्, स्वविवाहे परेषां संस्कर्तृकर्तृत्वाभावात्। अत एव "अवश्यकार्याः संस्काराः पैतृकादेव तद्धनात्" इत्यत्र 'संस्कारा उपनयनान्ता विवक्षिताः' इति सिद्धान्तः। ननु तथापि 'नानिष्ट्वा तु पितॄन् श्राद्धे कर्मवैदिकमाचरेत्' इत्येव प्रापकमस्तु? अस्यापि श्राद्धवत्कर्मपरत्वात्, प्रकृते तस्य विचार्यत्वात्। न च 'यज्ञोद्वाहादिमङ्गले' इत्येव विधायकमिति वाच्यम्? अस्य 'कन्यापुत्रविवाहे च' इत्यादिवचनैकवाक्यतया ऋष्यन्तरोक्तकन्यापुत्रविवाहविषयत्वात्। किं च

नान्दीमुखेभ्यः श्राद्धं तु पितृभ्यः कार्यमृद्धये।
ततो विवाहः कर्तव्यः शुद्धः सुतफलप्रदः॥

इत्यादि काम्यश्राद्धबोधकबाधितत्वात्। तस्याभावे तु तत्क्रमादिति तस्याभावे तस्य संस्कर्तृत्वाभावे इत्यस्यैव तदर्थत्वात् 'पिताकुर्यात्तदन्यो वे'त्यनास्थावाचि वा शब्दस्वरसात्। प्रथमं पितृशब्दस्यैव स्फुटमुपात्तत्वेन संस्कर्तृत्वाभावस्यैवोचितत्वात् कर्तृभेदेन देवताभेदाभावाच्च तस्याभावे प्रायेण केचित्, तत्र सकलनिबन्धविरोधात्।

यद्यपि—

नानिष्टवा तु पितृन् श्राद्धे कर्मवैदिकमाचरेत् ।

इति वचनात् संस्कर्तुरेव पित्रादयः प्रतीयन्ते, तथापि 'तदभावे तु तत्क्रमा' दित्येकवाक्यतया संस्करणीयपितृसम्बन्धिन एव पित्रादयो लभ्यन्ते। यत्तु संस्कर्त्तापि पितैव श्राद्धं कुर्यात् तद्बीजभूतसंस्कारस्य सत्वादिति 'अष्टा' वित्यादिवाक्येन पितृमत्वेऽप्यन्यस्य संस्कारकत्वे सिद्धे 'तत्क्रमा' दित्यनेन च तस्य श्राद्धादिकारस्यापि सिद्धेरिति।

पितुरसत्वे तु माणवककवत् कन्यावच्च श्राद्धं कुर्यादित्याह कात्यायनः।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मणि।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्॥

अस्यार्थः तस्याभावे संस्करणीयपितुरभावे तेषां पितृणां प्रकृते दाने प्राप्ते तत्क्रमात् संस्कार्यक्रमात्, अन्यथा व्यवच्छेदो न स्यात्। न तु तस्मिन् प्रमीते तद्वदेव कार्यमिति तदर्थः, पूर्वकल्पव्यवच्छेदकतुशब्दस्वरसविरोधात्, तस्याभावे त्वि' ति वचनात्। वृद्धौ सपिण्डनस्य वैयर्थ्यापत्तेश्च। न चैवमेवास्तु ? तथा सति हि 'यदहर्व्वा वृद्धिरापद्यते' इत्यनेनोक्तः सपिण्डनकालो न स्यादेव। 'न त्वसपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः' इति हारीतवचनेन नान्दीमुखाधिकारस्यैव फलत्वान्न पितुरन्तर्भावस्येति वाच्यम् ? ब्राह्मणादिहतमित्यादिपरिसंख्यानबोधितपितामहोपक्रमकश्राद्धविरोधापत्तेरिति। अत एव तस्य कन्याविवाहे तदीयमाभ्युदयिकमिति निबन्धारः। अत एव यो नामादिकर्त्ता पितृहीनस्य स तदीयं पितरमारभ्याभ्युदयिकश्राद्धं कुर्यादिति वर्द्धमानोपाध्यायचरणा लिखन्तिस्म।

केचित्तु पूर्वप्राप्तानां षण्णां मध्येऽवयुत्यानुवादक्रमेण पञ्चाप्यनुद्याप्राप्तः पिता तत्क्रमादित्यनेन विधीयते, तदन्तर्भावबलेन च वृद्धप्रपितामहस्त्यज्यते। मातृमातामहादयस्तु संस्करणीयपितुरेव तेषामित्यनेन स्वपितृभ्य इति पितृपदस्मारिताः संस्करणीयपितृसंबन्धिन एव पित्रादयः प्रत्यवमृष्यन्त इति वदन्ति। तन्न तत्क्रमादित्यनेन प्रधानतया पितृहीनस्यैव प्रत्यवमर्षे' वतेरेव युक्तत्वात्। किं च संस्करणीयपितुरभावे तेषां स्वपितुः पितृणां प्रकृते दाने प्राप्ते संस्कार्यपितृक्रमस्यार्थत एव लाभे तत्क्रमादित्यस्य वैयर्थ्यापत्तेः। तत्पदेन प्रस्तुतस्य सुतस्य प्रत्यवमर्ष एव लघवादेव एव पित्रादयः प्रतीयन्त इति। नन्वेतद्वचनेऽपि अष्टावित्यादिवचनात् संस्कर्तृत्वाभावपरतैवास्तु ? निर्बीजाध्याहारापत्तेः, श्राद्धार्हस्यापि पितुस्त्यागापत्तेः, वृद्धौ सपिण्डनवैयर्थ्यापत्तेश्चेति।

अत्र पिण्डरहिताभ्युदयिके प्रमाणं स्मरन्ति—

यत्क्रियां देशकालौ च द्रव्यब्राह्मणसंपदः।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥

पूर्वाह्णादिमुहूर्तकर्तव्यमङ्गलकर्मकालातिक्रमादिदोषभयात्संक्षिप्तमपि फलमूलादिभिर्यथा :लाभं पिण्डरहितमपि श्राद्धमाचार्या मन्यन्त इत्यर्थः। तथा च भविष्यपुराणे—

पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः।
वृद्धिश्राद्धे कुलाचारदेशकालाद्यवेक्ष्य हि॥

अग्नौ करणमर्घ्यं चावाहनं चावनेजनम् ।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्जयेत् ॥
पिण्डनिर्वापरहितं यत्र श्राद्धं प्रदीयते ।
स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते ॥
अक्षयादक्षिणास्वस्तिसौमनस्यमथास्त्विति ।
अक्षय्योदकदानं च आशीः प्रार्थनमेव च ॥
पिण्डहीने प्रकुर्वीत श्राद्धे चापि विचक्षणः ।

इति ।

आभ्युदयिके मात्रादिपिण्डोत्तरं पित्रादित्रिकपिण्डास्ततो मातामहादित्रिकपिण्डा देया इत्येव क्रमः । अत्र वदन्ति 'प्रदक्षिणमुपचारः' इति कात्यायनसूत्रात्प्रदक्षिक्रमेणैव पिण्डानां दाने सिद्धे मात्रादिपिण्डानां दक्षिणे पित्रादिपिण्डत्रयदानं तद्दक्षिणे मातामहादिपिण्डानां दानमिति । तदयुक्तम् ।

प्रागग्रेष्वथ दर्भेषु पितॄनामन्त्र्य पूर्ववत् ।
अपः क्षिपेन्मूलदेशेऽवने निक्ष्वेति निस्तिलाः ॥
द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ।
मातामहप्रभृतींस्तु तेषामेव हि वामतः

इति परिशिष्टे विशेषाभिधानात् तेषां पित्राद्यवनेजनस्थानानां वामत उत्तरतो मातामहाद्यवनेजनस्थानानां वामत उत्तरतो मातामहाद्यवनेजनस्थाने सिद्धे 'यथावनिक्तं पिण्डान् दद्यात्' इति कात्यायनसूत्रात्तत्रैव तद्दाने नियते वामत्वस्यैव सिद्धेः । एवं मात्रादिपिण्डानामपि प्रवामतैव, एकत्र निर्णीत इति न्यायात् । ननु प्रत्यङ्मुखोपविष्टानां पितॄणां ब्राह्मणानां वा वामत इत्येवार्थस्तेन प्रकृतक्रमलाभ इति चेत् ? भ्रान्तोसि ! तेषामित्यनेन पूर्वे प्रकान्तानामामास्तरणकुशानामवनेजनस्थानां वा प्रत्यवमर्शौचित्यात् । किं च 'उदङ्मुखेषु प्राङ्मुखो वा प्रत्यङ्मुखो वा प्रत्यङ्मुखेषूदङ्मुखो वा दद्यात्' इति श्रुतेः प्रत्यङ्मुखतायां मानाभावादिति दिक् । ओमद्य कार्तिक्यां चैत्र्यां वामुककर्माङ्गभूतमाभ्युदयिकश्राद्धमहं करिष्ये इतीष्ट्यादौ संकल्पवाक्यम् । कन्यापुत्रविवाहे तु नैमित्तिकमाभ्युदयिकं तेन ओमद्य पुत्रविवाह-कर्मण्याभ्युदयिकश्राद्धमहं करिष्य इति निमित्तसप्तमीसहितं वाक्ययं कार्यम् । यत्तु

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

इति वचनात्कन्यादानवाक्यं यथा प्रपितामहपूर्वकं क्रियते तथाभ्युदयिकसंकल्पवाक्यमपि कार्यम । 'अन्यत्र' तु पार्वणादौ पितृपूर्वकमेव संकल्पवाक्यं प्रयोजयन्ति तन्न एतद्वाक्यस्य

कल्पतरुपारिजातादिभिरलिखितत्वेन निर्मूलत्वावधारणात्, समूलत्वे वा इदमेव वाक्यं संकल्पवाक्ये प्रमाण' मिति कथं शिष्टाचारपरिसमाप्तः संकल्प इति सकलनिबन्धकृतो लिखन्तिस्म ? कथं वामुकपार्वणमहं करिष्य इति संकल्पवाक्यं लिखन्तः श्रीदत्तोपाध्यायाः पुरुषत्रयोल्लेखं जगुः ? इति । कन्यादानवाक्ये तु तत्प्रपितामहपूर्वकत्वं 'तत्पैतां पौत्रीमनुक्रमेत्' इति तत्प्रकरणस्थ वाक्यबलादिति । तदर्थश्च पितृनिर्देशानन्तरं पुत्रनिर्देशः कार्यः, तेन प्रपितामहपूर्वकतया प्रथमं प्रपितामहनिर्देशस्ततस्तत्पुत्रनिर्देश इति सिद्धयति । अत्र त्रैवार्षिकादिपदवदुभयपदवृद्धया पैतापौत्रीति सिद्धयति ।

दानं त्वद्भिरेव कार्यं न तु तिलादेरपि तत्र प्रवेशः ।

अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते ।

इति मनुवचनादिति

तडागादौ प्रतिनिधिना स्वपितृणामेव नान्दीमुखश्राद्धं कार्यं 'नानिष्ट्वा तु पितॄन् श्राद्धे कर्मवैदिकमाचरेत्' इत्यनेन स्वपितृणामेव पदिन्यायेनोपस्थितत्वात् । संस्कारजनके नामकरणादौ कन्याविवाहे माणवकपितृवत्कन्यापितृवच्च माणवकवत्कन्यावच्चेति वा तत्पितृणामेव श्राद्धम् ।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मणि ।
पिण्डानोद्वाहनात्तेषां तदभावे तु तत्क्रमात् ॥

इति विशेषश्रुतेरिति

छन्दोगानां वृद्धिश्राद्धे गन्धादिदाने ये चात्रेति स्ववेत्यन्तोऽविकृत एव पाठो न तु तत्राप्यूहो हेत्वभावात् । न च त्यागार्थकतैव हेतुरिति वाच्यम् ? समस्तमन्त्रस्यैव त्यागार्थकत्वात् । एवमेव कृत्यप्रदीपे पितामहचरणा लिखन्तीति । यद्यपि 'नान्दीमुखान् पितॄनहमावाहयिष्ये' इति पृच्छति 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने' इति कात्यायनसूत्रे तथाश्वलायन-कारिकायाम्' पितॄनिति पदात्पूर्वं पठेन्नान्दीमुखान्' इति कण्ठत एव नान्दीमुखपदस्य पूर्वनिपातः श्रूयते, तथापि वैदिकप्रयोग एवायं नियमो न तु लौकिकत्यागवाक्येऽपि 'पितॄन्नान्दीमुखान्नाम तर्पयेत्पितृपूर्वकम्' इति ब्रह्मपुराणस्वरसात् । एवमेव सर्वानुमतः प्रयोगोऽपीति ।

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चायथा क्रिया ॥

अक्रियेति यथोक्तक्रियाविरहः । सा च त्रेधा क्रियाविरहात्, परोक्ताचरणात्, स्वोक्तक्रमविरहाच्च । तत्राद्ये स एवाह ।

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्नापि तत्क्रिया ॥

तत्क्रियातदङ्गमात्रं क्रिया, सापि नास्ति किंतु योगियाज्ञवल्क्योक्तं विष्णुस्मरणमात्रं तत्, द्वितीये त्वाह स एव ।

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ।
कर्तुमिच्छति दुर्मेधा मोघं तस्य तु तत्कृतम् ।।

इति । इदं तु तत्कर्मणः स्वशाखीयत्वे सतीति बोद्धव्यम्, अन्यथा तु परशाखीयमपि ग्राह्यमित्याह स एव—

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि कर्मवत् ।।

यत्र तु स्वशाखायां स्तोकाभिधानं तत्राकांक्षापूर्वकं वाक्यमन्यदीयमपि ग्राह्यं 'स्मृतिशास्त्रविकल्पं तु आकांक्षापूरणे सतीति' श्रुतेः ।

अथ श्राद्धाधिकारिणः

अधिकारानुवृत्तौ शंख :—

भार्यापिण्डं पतिर्दद्यात् पत्ये भार्या तथैव च ।
श्वश्र्वादेस्तु स्नुषा चैव तदभावे सपिण्डकः ।।

अत्र श्वश्र्वादेरित्यादिपदात् श्वशुरपरिग्रहः । तेन यथा श्वश्रूश्वशुरयोः श्राद्धे स्नुषाया अधिकारः, तथा स्नुषायाः श्राद्धे देवरादिसत्वे (पि) श्वश्रूश्वशुरयोः परस्परमधिकारस्तथैव चेति वचनादिति पारिजातः, तन्न 'तथैव चे' त्यस्य प्रकारमात्रवाचकत्वात् । अप्रकारार्थकत्वे नद्या जलान्वयवत्पूर्वत्रैवान्वयात् ।

औरसे विद्यमाने कृत्रिमपुत्रेण पुत्रत्वकरस्य श्राद्धं न कार्यं प्रापकाभावात् । ननु 'पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया' इत्यत्र पुत्रेण द्वादशविधेनेति रत्नाकरव्याख्यानात् पुन्नाम नरकत्राणकर्तृपुरुषत्वस्य पुत्रपदप्रवृत्तिनिमित्तस्य सत्वादस्त्वधिकार इति चेन्न क्रमेणैतान्निर्दिश्य 'पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः' इति याज्ञवल्क्यवचनविरोधात् । तत्कथमौरससत्वेऽपि पुत्रिकापुत्रक्षेत्रजदत्रिमकर्तृकश्राद्धम् ? विशेषवचनादित्यवेहि । अत एव कात्यायन :—

कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरर्थसंबन्धात् स कुर्यादुभयोरपि ।।

बोधायनोऽपि—स एव द्विपिता द्विगोत्रश्चोभयोरपि स्वधा ऋक्थभागिति । बृहस्पतिरपि—'अथ यदि स्व स्व भार्यायां स्वमपत्यं न स्यादथ यदि स्यादुभाभ्यामेव दद्युः' ।

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रजः ।।

अकृथगोत्रे जनयितुर्न हरेत्कृत्रिमः सुतः।
अकृथगोत्रानुगः पिण्डो व्यपैति ददतः स्वधाम् ॥

एवं च कात्यायनोक्ते 'नियमादिति श्रुतेर्बौधायनवचनेऽपि 'उभयोरपि स्वधा ऋक्थभागि'ति श्रवणात्, बृहस्पतिवचने च—'अथ यदि दद्यादुभाभ्यामेव दद्यादि'ति कण्ठत एव श्रवणात्। "ऋक्थगोत्रानुगः पिण्डो व्यपैति ददतः स्वधामिति" वाक्यादौरसे पुनरुत्पन्ने 'ज्यैष्ठ्यं तेषां निवर्तते' इति तत्प्रकरणे तन्मात्रपर्युदासाच्च त्रयाणामधिकारस्य निष्प्रत्यूहत्वात्। किं च

अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनस्य च ॥

इति हेतुमन्निगदस्वरसेनौरससत्वे पूर्वोपात्तस्यापि कृत्रिमपुत्रस्य सन्निहितप्रोषितत्वेन कार्यानिर्ज्जकत्वादौरसपुत्रेणैव तत्सिद्धेः। तथा च कृत्रिमपुत्रसत्वे भार्याशिशुपुत्रवतः प्रमीतस्य षोड़शश्राद्धानि भार्ययैव कार्याणि, तदभाव एव तदुपादानस्य न्याय्यत्वेन तदुत्पत्तिमात्रेणैव तस्य पिण्डदत्वनिरासादत एव शिष्टाचारोप्येवमेवेति दिक्।

देवलः—

चतुर्वर्णेष्वचारित्र्याद्यमयोः पूर्वजन्मतः।
यस्य जातस्य समयोः पश्यन्ति प्रथमं मुखम् ॥
सन्तानः पितरश्चैव तस्मिन् सर्वे प्रतिष्ठिताः।

मनुः—

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥

औरसादीन् पारशवान्तानभिधाय नारदः—

पूर्वपूर्वस्मृतो ज्येष्ठो जघन्यो यो य उत्तरः।
क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने ॥

देवलः—

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः ॥

तदेतेषां वचनानां पर्यालोचनया सदृशस्त्रीष्वेकैकस्त्रीणां वा जातानामग्रज एव ज्येष्ठः, तुल्यमातृकयोः समकालप्रसूतयोः प्राथमिकपितृसाक्षात्कार विषय एव ज्येष्ठः। दैवाद्युगपत्साक्षात्कारविषयत्वे च गुरोरिच्छया। मृते ज्येष्ठे वर्तमानापेक्षयाग्रज एव, अनन्यगतिकत्वात्। यमजयोरग्रज एव ज्येष्ठः। द्विजासु पश्चाज्जातोऽपि ब्राह्मणीसुत एव, वर्णोत्कर्षात्। एवमेव

क्षत्रियावैश्यापुत्रयोरपि क्षत्रियापुत्र एव ज्येष्ठः। पुत्रिकापुत्रादिषु पारशवान्तेषु पश्चादुत्पन्नोऽप्यौरस एव ज्येष्ठः। एतस्मिन्नेव तु पुत्रे बाधकाभावे सति पुत्रान्तराखण्डितयोनिसमुत्थत्वात् पुत्रिकापुत्रादिषु सर्वेषु पाठिकक्रमसिद्ध एव ज्येष्ठः, तेनात्राननुगमो न दोषः, वाचनिकत्वात्। एवं च—

सर्वेषां च मतं ज्ञात्वा ज्येष्ठेनैकेन यत्कृतम्।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्॥

अत्र प्रयोगोपसंहारसमर्थस्य तस्यैव श्राद्धेऽधिकार इति निर्गलितम्। द्विजपुत्रास्तु सर्वे औरसाः, पारशवस्यैवागत्योपादानादिति। ननु च—

अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः।

इत्यादिस्वरसात् 'सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत्' इत्याद्यतिदेशाप्रवृत्तौ भ्रातुः पुत्रे द्वादशविधपुत्रेषु चासत्सु पौत्रे विद्यमानेऽपि पुत्रकरणमस्त्विति चेत् मैवम्। पुत्रकरणं हि अपत्यमुत्पादनीयमिति नित्यविधिपरिपालनार्थम् पिण्डोदकक्रियार्थं वा न, तयोरपि पौत्रेणैव तत्सिद्धेः। अत एव "पुत्रेषु चासत्सु पौत्रे सति पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति पौत्रेणैकादशाहादिकर्त्तव्यं श्राद्धषोडशम्" इति कात्यायनोऽप्याह 'प्रपौत्रसत्वेप्येवम्' तथा च यस्मिन् सति पिण्डादिक्रिया निवर्हति, नित्यविधिपरिपालनं तु न भवति, तस्मिन् सत्यपि कृत्रिमपुत्रकरणं शास्त्रार्थः।

ननु कथं तर्हि पौत्रसत्त्वे औरसस्योत्पत्तये यत्नः? तस्य सर्वाभ्यर्हितत्वात्, पुत्रः पौत्रः प्रपौत्रो वे'ति क्रमनिर्देशस्वरसात्, कृत्रिमादयस्तु नौरससमाः पुत्राः, पुन्नामनरकत्रातृत्वेपि सन्तानानिर्वाहकत्वात्। अत एव 'आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्" इत्याद्यौरसापेक्षया कृत्रिमाद्यपकर्षकथनम्। न च पौत्रसत्वेऽपि पुन्नामनरकत्राणार्थं पुत्रकरणमावश्यकमिति वाच्यं पुत्रं विना पौत्रस्यासम्भवेन तत्पुत्रवत्तयैव पुन्नामनरकत्राणसिद्धेः। अत एव 'तदुत्पत्तौ यतेत सः' इति पुत्रोत्पत्तौ विधिः, तस्योत्पत्त्यैव पुन्नामनरकत्राणपितृऋण-निस्तारयोः संभवात्। 'अपत्यमुत्पादनीय'मिति विधेरपि तत एव निर्व्यूढत्वादिति।

बहूनामेकजातानामेकश्चेत् पुत्रवान् भवेत्।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत्॥

तथा—

बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्वास्तेनैव पुत्रेण पुत्रिण्यो मनुरब्रवीत्॥

इत्युभयत्रापि पुत्रित्वातिदेशः पुत्रिणीत्वातिदेश एव, उपसंहारादिति परमगुरवः। अन्ये तु 'तेन पुत्रेणे'ति श्रवणादुभयत्रापि पुत्रत्वातिदेश एवेति। अपरे तु विनिगमनाविरहा-दुभयातिदेश एवेत्याहुः। तत्र न द्वितीयः एवं सति पुत्रत्वातिदेशस्योभयस्याप्यनारम्भत्वापत्तेः, प्रथमप्रतीकेनैव कृतकृत्यत्वाश्रवणात्। अत एव न तृतीयोऽपि एकेनैव निष्पन्नत्वात्।

वस्तुतस्तु सपत्नीपुत्रे पुत्रत्वं नातिदिश्यतेऽश्रवणात्, किन्तु सपत्नीमातरि पुत्रिणीत्वम्। एतेन 'तेन पुत्रेण पुत्रिण्य' इत्यभिधानात् तस्य पुत्रत्वमतिदिशदेववाक्यं तासां पुत्रिणीत्वमप्युपदिशतीति परास्तम्, अतिदेशोपदेशरूपार्थभेदेन वाक्यभेदापत्तेश्च । न च तेन पुत्रेणेति पुत्रत्वातिदेशः पुत्रिण्य इति च तत्सम्बन्धविधानमात्रमिति वाच्यम् तत्सम्बन्धस्य प्रमाणान्तरसिद्धतया विधानायोगात्, अन्यतः प्राप्ते शास्त्रानारम्भात् तस्माद्यथा स्वीयेन धनेन धनीत्यत्र द्वाभ्यामपि धनशब्दाभ्यामेकस्मिन्नपि धने विहिते तद्धनसम्बन्धो वाक्यार्थः, तथा तेन पुत्रेण पुत्रिण्य इत्यत्रापि द्वाभ्यां पुत्रपदाभ्यामुपस्थापितस्य सपत्नीपुत्रस्य जनकत्वलक्षणः सम्बन्धो वाच्यतार्हः, स च तदजनन्यां तस्यां बाधित इति सूक्तम् पुत्रिणीत्वातिदेशोऽयमिति ।

यद्यपि स्त्रीश्राद्धे दुहितुरधिकारः कण्ठतोऽपि कथितस्तथापि—

दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता।
अशौचमुदकं पिण्डमेकोद्दिष्टं तयोरपि ॥

इति वचनात् सपत्नीपुत्रानन्तरं दुहितुरधिकार इति । अत्र संस्कृतेति विशेषश्रवणादसंस्कृतायास्सुतरामधिकार इत्युक्तम् पुत्रवदिति श्रुतेरिति तन्न, तस्य प्रकारार्थकत्वात्, पुत्रिणीत्वातिदेशविरोधापत्तेश्चेति दिक् ।

अनूढायास्तु पूर्वैवक्रिया, तस्यास्सपिण्डीकरणनिषेधात्। किं च तस्याः श्राद्धस्यावश्यकतायां मानाभावेन ब्रह्मपुराणीयकल्पेऽप्यधिकाराभावात्। प्रत्युत 'ततश्श्राद्धमशुद्धौ स्वित्यादिना जात्युक्तशावाशौचमुपक्रम्यैव तस्य कथनाच्चेति । न चैवं

मित्रबन्धुसपिण्डेभ्यः स्त्री कुमारीभ्य एव च।
दद्यात्तु मासिकं श्राद्धं सांवत्सरमतः परम् ॥

इत्यादिविरोधः ? तस्यानेकवचनपर्यालोचनयानूढापुत्रिमात्रविषयकत्वादत एव 'दत्तानाञ्चाप्यदत्तानां कन्यानां कुरुते पिता' इत्यत्रादत्तानां पूर्वक्रियापरतया सङ्कोचः पितुरेवाधिकारश्चेति । ये तु

एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत् ॥

इत्यत्र समवेतानामविभक्तानामिति व्याख्याय गयाश्राद्धे विभक्तानामपि पृथगधिकार इति वदन्ति ते भ्रान्ताः

भ्रातृणामविभक्तानामेको धर्मः प्रवर्त्तते।
विभागे सति धर्मोऽयं भवेत्तेषां पृथक् पृथक् ॥
यद्येकजाता बहवः पृथक् जाताः पृथक्क्रियाः।
सम्यक्कर्मगुणोपेता न चेत्कृत्यसङ्गताः ॥

इत्यादि नारदवचनवलात् बाधसापेक्षविध्यापत्तेः। किं च समवेतानामित्यस्य तदर्थकत्वे प्रमाणाभावेन मिलितानामित्यस्यैव तदर्थकत्वात्। लिखितवचनादेव संसर्गानन्तरं न पृथगधिकार इति द्रष्टव्यम्

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः।
मुखसन्दर्शनेनापि पुत्रोत्पत्तौ यतेत सः॥
ऋणमस्मिन् सन्नयति अमृतत्वञ्च विन्दति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥
यत्र क्वचन जातेन पिता पुत्रेण नन्दति।

इत्यादिवचनबलादौरस एव पुत्रपदं शक्तम्, तेन सवर्णत्वे सति स्वजन्यपुंस्त्वमेव शक्यतावच्छेदकमिति। क्षेत्रजादावन्यत्र लक्षणेति केचित्। अन्ये तु

आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्।
तथैकादशपुत्रास्तु पुत्रिकौरसयोर्विना॥ इति

तथा

क्षेत्रजादीन् सुतानेतानेकादश यथोचितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान् मनीषिणः॥

इत्याभ्यामेकादशानां प्रतिनिधित्वं कण्ठतो दर्शिते प्रतिनिधित्वञ्च यवगोधूमयोरिव तद्भिन्नत्वे सत्येव तत्कार्यकारित्वम्। अत एव तदुभयान्यतरत्वं शक्यतावच्छेदकमित्याहुः।

वस्तुतस्तु त्रयोदशान्यतमत्वे सति पुन्नामनरकत्राणकर्तृपुरुषत्वमेव शक्यतावच्छेदकम्। अत एव सपत्नीपुत्रभ्रातृपुत्रयोरपि व्यावृत्तिः। अत एव त्रयोदशानामपि पुत्रत्वमविकलमेवेति प्रथमो द्वितीयस्तृतीय इत्याद्यनेकसूत्रे

पुत्रान् द्वादश नाह मनुः स्वायम्भवो नृणाम्।
पुत्रास्तु द्वादशप्रोक्ता मनुना येन पूर्वशः।
तथा पारशवस्त्रयोदश ··· ··· ··· ···॥

इत्यत्र सर्वत्र तेषां सर्वेषामपि पुत्रत्वेन निर्देशात्, पितरं त्रायते इत्यस्यैव परं शक्तिबीजत्वेनोपादानात्तस्य च सर्वत्रैव सत्वादन्यथा पुत्रित्वातिदेशानुपपत्तेः, बहुबाधापत्तेश्चेति। कथं तर्हि तदुत्पत्तावित्यादिकथनम्? तस्य सर्वस्मादभ्यर्हितत्वात्। अत एव प्रतिनिधित्वमपि तयोरपेक्षया किञ्चिन्न्यूनत्वमपि तु न तद्भिन्नत्वमपि।

पुत्रान् द्वादशयनाह मनुः स्वायम्भवो नृणाम्।
सन्तानकारिणस्तेषामौरसः पुत्रिका तथा॥

इति शब्दत एवाभिधानादिति दिक्।

एवञ्च पितरत्रावनेनिक्ष्व पितामहात्रावनेनिक्ष्व प्रपितामहात्रावनेनिक्ष्वेति श्रुत्या तथा पितरिदन्तेऽर्घ्यम् पितामहेदंतेऽर्घ्यम् प्रपितामहेदन्तेऽर्घ्यमिति श्रुत्या च देवतात्वनिर्णयाद्वाचनिकत्वादौरसेन पुत्रिकापुत्रेण क्षेत्रजेन दत्रिमेणैव च पार्वणं कार्यमिति।

"मृते पितरि पुत्रेण क्रिया कार्या विधानतः" इति वाक्यात् कृत्रिमादिनापि पितृपदेनैव श्राद्धानि कार्याणि 'पुत्रेण' द्वादशविधपुत्रेणेति रत्नाकरव्याख्यानात्, लक्षणाया अलौकिकत्वेनान्याय्यत्वात्, शब्दान्तरस्याश्रुतत्वात्, क्षेत्रजादाववश्यवक्तव्यत्वाच्च। यत्र च बहव औरसपुत्रास्तत्रापि प्रेतश्राद्धे ज्येष्ठ एवाधिकारी प्राथम्यात्, कपालाधिकरणन्यायात् न तु सर्वेऽविनिगमनापत्तेः।

यत्तु ज्येष्ठे क्षतादिना दूषिते तत्कनिष्ठस्य पुत्रत्वेन स्वरूपयोग्यस्य विहितकालीनाधिकारिज्येष्ठाभावरूपायाः सहकारियोग्यतायास्सत्वात् ज्येष्ठत्वेऽपि तदधिकाराभावेन विशेषणाभावायत्तविशिष्टाभावसत्वात् कर्तृत्वमस्त्विति चेन्न ज्येष्ठत्वेनाधिकारात् राज्ञ इव राजसूये अधिकृतस्यैव कर्तृत्वात्। न च पुत्रसत्वेनाधिकारिता, अविनिगमनापत्तेरुक्तत्वात्। न च तस्याशौचेनाधिकार्य्यन्तरकल्पना, बीजाभावात्। अथाशौचान्तदिन आद्यश्राद्धस्य विहितत्वात्तद्दिने तस्यावश्यकतया तेनैव कनिष्ठाधिकार आक्षिप्यत इति चेत्? न हि विधिरेव नियमविधिस्तयोर्भेदात्। ऋष्यशृङ्गेण 'देये पितृणा' मित्यनेनाशौचान्तश्राद्धस्योपदेशाच्च। अत एव देशान्तरितेऽपि ज्येष्ठे कनिष्ठाधिकारः परास्तः, पुत्रत्वेन स्वरूपयोग्यतायां देशान्तरितज्येष्ठत्वेन सहकारियोग्यतायां मानाभावात्। किं च तन्मते कनिष्ठेन श्राद्धे कृते ज्येष्ठेन पुनस्तत्करणम् प्रेतत्वनाशाय? प्रायश्चित्ताय वा? नाद्यः, ध्वस्तस्य ध्वंसानुपपत्तेः। नापरः, अधिकारिणैव श्राद्धस्यानुष्ठितत्वेनाकांक्षाविरहात्। वस्तुतस्तु।

बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः।
सर्वेषां तु मतं कृत्वा ज्येष्ठेनैकेन यत्कृतम्॥
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्।

इति मरीचिवचनादेवाविभक्तबहुपुत्रसत्त्वेऽपि ज्येष्ठस्यैवाधिकारः। एवं विभक्तबहुपुत्रसत्त्वेऽपि

सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोडश।
पृथङ् नैव सुताः कुर्युः पृथग् द्रव्या अपि क्वचित्॥

इति हारीतवचनादेव विभक्तबहुपुत्रसत्त्वेऽपि ज्येष्ठस्यैवाधिकार इति प्रमितेः। अथैतद्वचनाभ्यामत्र ज्येष्ठस्यैवाधिकारसिद्धेः "पितुः पुत्रेण कर्त्तव्या पिण्डदानादिकक्रिया" इत्यत्रापि पुत्रपदं ज्येष्ठपुत्रपरमेव, एकमूलकल्पनालाघवात्। न चैवं पतितादिज्येष्ठेऽतिप्रसङ्गः? ज्येष्ठस्यापि प्रयोगोपसंहारसामर्थ्ये सत्येवाधिकारात् "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यत्रेव। एवं च तत्कनीयसोऽधिकारः। न चैवं क्षताद्यशौचादावपीति ज्येष्ठे एव प्रसङ्गः? तत्र 'देये पितृणां श्राद्धे' इत्यनेन तस्यैवाशौचान्ते तदनुष्ठाननिर्देशात्। ननु चाविभक्तानामपि कनीयसामधिकार एव किन्त्वनुमतिद्वारैव तेषां कर्तृत्वम् सर्वेषां तु मतं कृत्वेति वचनात्। विभक्तानां तु सुतरामधिकारः कथमन्यथा तेषाङ्कथनमिति "पृथङ् नैव सुताः कुर्युः पृथग् द्रव्या अपि क्वचित्" इति वचनेन निषिध्यत इति मैवम्, ज्येष्ठकर्तृकप्रयोगोपसंहारे तत्समर्थस्यैव ज्येष्ठस्याधिकारात्, न ह्यन्यत्कर्तृके प्रयोगेऽन्यस्य कर्तृत्वं सम्भवति। तस्मात् सर्वैरेव कृतम्भवेदिति मुख्यकर्तृत्वानुपपत्तेः न ज्येष्ठस्तुतिमात्रन्तत् सर्वेषान्तु मतमित्यविभक्तधनत्वपक्षप्राप्तस्यैकपाकेन वसतामित्यादिवचने श्राद्धस्य सकृत्करणस्यानुवाद एव, न तु सर्वकर्तृत्वविधिरसम्भवात्। एवं प्रेतत्वविमुक्तिफलस्यावश्यकज्येष्ठप्रयोगादेव सिद्धेरर्थप्राप्तस्यैव विभक्तकनीयसां 'पृथङ् नैव सुताः कुर्युः' इत्यनुवाद एव, तस्मात् सुष्ठूक्तं ज्येष्ठ एवाधिकारीति।

श्राद्धे—

आविकं मार्गमौष्ट्रं च सर्वमेकशफञ्च यत्।
माहिषं चामरं चैव पयो वर्ज्यं विजानता॥

एवं चात्र महिषीदुग्धनिषेधात् तद्घ्नोऽपि निषेध इति केचित्तन्न, यावद्वचनं हि वाचनिकमिति न्यायविरोधात् । अत एव तद्विकारा अनिषिद्धा इति तत्त्वम् ।

एवम्भगवन्नैवेद्ये विष्णुः—'नाभक्ष्यं नैवेद्यम्' नैवेद्यार्थे भक्ष्येऽप्यजामहिषीक्षीरे पञ्चनखमांसानि नादद्यादिति शेषः । माहिषीमेषीच्छागीनां दुग्धदधिघृतान्यपेयानि, तदुक्तं वराहपुराणे—

यद्यन्ममोपभोग्यानि गव्यं दधि पयो घृतम् ।
आविकं माहिषं छागमयज्ञीयमुदाहृतम् ॥

इज्यत इति यज्ञः विष्णुः, अयज्ञीयमवैष्णवं माहिषमाविकं छागमिति दुग्धदधिघृतमित्यस्य विशेषणम् ।

षट्कयोरेव हारीतोक्तलक्षणपाते माधवादिषट्क एव मलमास इसि वर्षकृत्ये । अत्र च—

घटकन्यागते सूर्ये वृश्चिके वाथ धन्वनि ।
मकरे वाथ कुम्भे वा नाधिमासं विदुर्बुधाः ॥

इत्यनेनोक्त एकः षट्कोऽपरश्च माधवादारभ्य परिशिष्टिश्चैत्रान्त इति सर्वं रमणीयम् । श्राद्धचिन्तामणौ—इदं तु तुलादिषट्क एव न त्वन्यदेति द्रष्टव्यमिति । अत्र षट्कयोरेव लक्षणपाते माधवादिषट्क एव मलमासः ।

एकत्र मासद्वितयं यदि स्यादब्देऽधिकं तत्र परोऽधिमासः ।

इति श्रुतेः । घटकन्यागते सूर्य्ये इत्युक्तवचनबलात् तुलादावेव लक्षणपाते तत्रापि मलमासः ।

दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित् ।
नपुंसकत्वं भवति न तु पौषस्य कुत्रचित् ॥

इति वचनात् । न च सर्वत्रोत्तरस्यैव मलमासत्वनियमः, घटकन्यागत इति वचनोक्तनिषेधस्तु पूर्वस्येति वाच्यम् घटादिविशेषनिषेधानुपपत्तेः । ज्योतिषे —

असंक्रान्तमासोऽधिमासः स्फुटः स्याद्द्विसंक्रान्तमासः क्षयाख्यः कदाचित् ।

अयं क्षयाख्यः कर्मार्हं एवापवादकाभावादिति साम्प्रदायिकाः । केचित्तु—

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्प्पाहस्पती मासावधिमासः प्रकीर्त्तितः ॥

इति पठित्वा द्विसंक्रान्तस्य मलमासस्य च रविणा लंघितस्यापि त्रयाणामपि बहुवचनविरोधात् कर्म्मानर्हत्वं वदन्ति । तन्न तद्वचनस्य निर्मूलत्वात् ।

प्रत्युत—

मलं वदन्ति मासस्य मासं मासविदोऽधिकम् ।
नेहेतात्र विशेषे ज्या अन्यत्रावश्यकाद् विधेः ॥

तथा—

मलिम्लुचस्तु मासो वै मलिनः पापसम्भवः ।
गर्हितः पितृदेवेभ्यः सर्वकर्मसु तं त्यजेत् ॥

इत्यादिना पापसंभूतस्यैव कर्मानर्हत्वादिति ।

एकादश्यां तु शुक्लायामाषाढे भगवान् हरिः ।
भुजङ्गशयने शेते यदा क्षीरार्णवे सदा ॥

इति वचनादेकादश्यामेव हरिशयनमिति तत्त्वम् । केचित्तु—

क्षीराब्धौ शेषपर्य्यङ्क आषाढ्यां संविशद्धरिः ।
निद्रां त्यजति कार्तिक्यां तयोस्तं पूजयेत् सदा ॥

इति वचनादाषाढीपदस्य पूर्णिमाशक्ततयाषाढ्यामेव हरिशयनमिति वदन्ति, तन्मन्दम्; आषाढीपदस्य पूर्ववाक्यैकवाक्यतया योगेन तदेकादशीपरत्वादेकमूलकतानुरोधात्, योगार्थस्य चैकवाक्यतया लघूपस्थितिकत्वात् । अत एव 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'मित्यत्र वाजिपदेनामिक्षारूपान्नवतां विश्वदेवानामेव वाजिनेऽपि देवतात्वम्; न तु रूढ्यर्थानामश्वानां प्रकरणानुरोधादिति सिद्धान्तः ।

केचित्तु कल्पभेदेन व्यवस्थामिच्छन्ति, तदयुक्तम्; एकवाक्यत्वे संभवति वाक्यभेद-कल्पनाया अन्याय्यत्वात् । यदपि 'प्राप्ता तवेयं किल कौमुदाख्या जागृष्व' इति वचनात् कार्तिकद्वादशीविषयस्य प्रबोधस्य मन्त्रलिङ्गजत्वाद् द्वादश्येव प्रबोधसमयस्तथा च शयनकालोऽपि स एव, प्रबोधशयनयोरेकतिथिनियमादिति । तदपि न, लिङ्गापेक्षया श्रुतेर्बलवत्वात् । अत एव 'श्रुतिलिङ्गप्रकरणे' त्यादि जैमिनिसूत्रं संगच्छते ।

द्वादश्यां सन्धिसमये नक्षत्रापायसंभवे ।
आभाकासितपक्षस्य शयनावर्तनादिकम् ॥

इत्यादौ सामीप्यलक्षणया तदेकादशीपरमिति । शिष्टाचारोऽप्येवमिति ।

माधवाद्येषु षट्स्वेव मासि दर्शद्वयम्भवेत् ।
द्विराषाढः स विज्ञेयः शेते च श्रावणेऽच्युतः ॥

अत्रोपसंहारबलाद् द्विराषाढो द्वितीयाषाढ इति केचित्, माधवाद्येष्वित्यादिविरोधात् । किंतु द्विराषाढो मलमास एव, तथा चाषाढस्यैव द्विराषाढत्वे मलमासत्वे 'शेते च श्रावणेऽच्युतः' इत्यत्रैवाषाढस्यैव कृष्णादिरीत्या चतुर्थपक्षे सौरश्रावणे तत्र न मिथुनार्कादर इत्यर्थः । घटकेष्वित्युपलक्षणपरम् ।

दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित् ।
नपुंसकत्वं भवति न तु पौषस्य कुत्रचित् ॥

इति स्मरणात् ।

यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

यव्यो मासः, स च कृष्णादिरिति स्मृतिसारः, शुक्लादिरिति समयप्रदीपः, सौर इति रत्नाकरप्रभृतयः, अयं तु पक्षः श्रेयान् ।

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणम् ॥

इति श्रुतेराचाराच्च । समुद्रगाः साक्षात् समुद्रगामिन्यः । तास्तु गङ्गा-महानदी-तापी-तुङ्गभद्रा-ताम्रपर्णी-कावेरी-रेवा-सिन्धुनामान इत्येकादश । शिष्टाः—

तपनस्य सुता गङ्गा गोमती च सरिद्वरा ।
रजसा च न दुष्यन्ति ये चान्ये नदसंज्ञकाः ॥

इति पठन्ति ।

आदौ कर्कटके देवी त्र्यहं यावद्रजस्वला ।
चतुर्थेऽह्नि संप्राप्ते शुद्धा भवति जाह्नवी ॥

सिंहकर्कटयोर्मध्य इति च ।

अशून्यशयनव्रते तु "तथा कलत्रसम्बन्धो देवमासे वियुज्यताम्" इति मन्त्रे स्त्रिया एतद्व्रते क्रियमाणे पतिसम्बन्ध इति नोहः कार्यः, पुरुषस्य स्त्रियाश्चेति प्रक्रमाद्युगपद्विधौ प्रकृति-विकृतिभावविरहेणोहासम्भवात् । न चासमवेतार्थकता, सम्बन्धस्योभयघटिततया पतिमत्त्वस्या-प्यर्थसार्थत्वादिति ।

तिथिवेधे गौड़ाः—

युग्माग्निकृतुभूतानि षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्या तु पूर्णिमा ॥
प्रतिपदा त्वमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥

तिथ्योर्युग्ममिति सर्वत्रापि संबध्यते । तेनैतदुक्तं भवति—द्वितीया तृतीयया मिश्रा व्रताद्यर्थं ग्राह्या, एवं तृतीयापि द्वितीयामिश्रा । एवं युग्मान्तरेऽपि सहिततिथिग्रहणमेव । एतद् व्यस्तमिति पूर्वोक्तविपरीतं न कार्यमित्यर्थः । चतुर्दशी चात्र शुक्लैव, पूर्णिमायोगसामर्थ्यात् । कृष्णचतुर्दशी तु त्रयोदशीयुक्तैव 'कामविद्धो हरः पूज्यः' इति विशेषकथनात् ।

षष्ठ्यष्टमी अमावास्या तथा कृष्णा त्रयोदशी।
एताः परयुताः कार्याः पराः पूर्वेण संयुताः॥
एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।
अमावास्या त्रयोदश्यावुपोष्याः स्युः परान्विताः॥

इति वचनात्। अत एव रात्रिद्वयेऽपि शिवरात्रिव्रते योग्यकाललाभे प्रथमदिन एव त्रयोदशीमिश्रैव ग्राह्या। अत एवोदयगामिन्येव परदिने ग्राह्येति परेषां मतमपास्तम्, पराः सप्तम्यादय एव परयुता इत्यनेन तासामेव प्रकृततयोपस्थापनात्। एवं च कृष्णत्रयोदशी चतुर्दशीसहितोपोष्येति सिद्धम्। प्रतिपदपि शुक्लैवास्यायोगात्। तदेवं द्वितीयादिद्वादशीपर्यन्ताः शुक्लाः कृष्णाश्च, विशेषानुपदेशात्। एवं च दशमी नवमीमिश्रैव ग्राह्या, विशेषाश्रुतेः। कृष्णा चतुर्दशी त्रयोदशीमिश्रैव, कृष्णप्रतिपदपि पूर्णिमामिश्रैव, शुक्लत्रयोदशी द्वादशीमिश्रैव, वैपरीत्ये विशेषात्। युगमन्वादितृतीयादावुदयगामिन्यामखण्डतिथौ स्नानदानादिदैवकर्म पूर्वाह्णे कार्यम्, सन्देहे बीजाभावात्। उभयतिथिवेधे तृतीयादावुदयकालालाभे उत्तरदिन एव।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया।
सूर्योदयमपेक्षन्ते न तत्र तिथियुग्मता॥

इति वचनात्। युगाद्या इति पुण्यकालत्वेन मन्वादिपौर्णमास्यादीनामप्युपलक्षणम्, न्यायतौल्यात् शिष्टाचाराच्च। एवमुदयद्वयेऽपि कर्मयोग्यतृतीयालाभे प्रथमोदयगामिन्यामेव, कपालाधिकरणन्यायात्। न च—

रम्भाख्यां वर्जयित्वा तु गणयुक्ता प्रशस्यते।

इति विशेषवचनात्तत्रापि चतुर्थीमिश्रैव ग्राह्येति वाच्यम्। एतस्य लिङ्गाद्वेधविषयत्वेनाखण्डतिथ्यविषयकत्वात्। युगादिश्राद्धे तु योग्यकालव्यापिनी ग्राह्या। दिनद्वये मध्याह्नेऽपि तल्लाभे प्रथमे दिन एव, प्रथमप्राप्तत्वात्। 'सूर्योदयमपेक्षन्ते' इत्यादिवचनानामत्राप्रवृत्तेश्चेति सर्वं रमणीयम्।

अयं च युग्मविधिरहोरात्रसाध्योपवासादिकर्मणि सर्वत्र बोद्धव्यः। देवपूजादावपि विहितपूर्वाह्णादिकाललाभे सति। यदा चैकस्मिन्नेव दिने विहितकाललाभस्तदा तत्रैव, उभयत्र विहितकाललाभ एव युग्मविधेरपेक्षितत्वात्, नियममात्रे लाघवाच्च। व्यस्तनिन्दापि तत्रैव, विधिशेषत्वात्। एवं च वचनान्तरे उपवासश्रुतिरुपलक्षणम्।

केचित्तूपवास एव युग्मविधिमिच्छन्ति। ते हि भ्रान्ताः, वचनान्तरविरोधात्। निषेधनिन्दायां तु न युग्मविधिः, अष्टम्यादौ मासनिषेधस्य समस्तकालव्यापकत्वेनाक्षेपविरहात्। एवं च 'निषिद्धे कालवर्जनम्'इति वचनं न्यायमूलकमेव। भूपालमते तु सप्तम्येकादश्योर्वाचनिकी व्यवस्था, तिथ्यन्तरेषु तु प्रधानकालानुरोधादुदयकालव्यापितिथ्यादरः। अत एव—

व्रतोपवासनियमे घटिकैकापि या भवेत्।
सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी॥

इति गौडीयवचनमपि न्यायमूलकमेव।

एवं नक्षत्रेऽपि द्वैधे उदयकालीननक्षत्रादर एव, न्यायसाम्यात् । ननु सप्तमीमुपवसेदिति विधिस्तिथिद्वैधेन सम्भवत्येव, अहोरात्राभोजनरूपस्योपवासस्य सप्तम्यां कर्त्तुमशक्तेः, तिथ्यन्तर-सहकारितया नैरपेक्ष्यबाधापत्तेरिति चेन्न, अहोरात्रावच्छेदेनैव सप्तम्याद्यन्वयात् । तस्माद्यस्मिन्नहोरात्रे तादृशसप्तम्यान्वयस्तत्र न भुञ्जीतेत्यस्यैव विधिशरीरत्वादिति । रात्रिकालीने तु नक्तादिव्रते रात्रियोग एवादरणीयः, पठन्ति च 'नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते' इति । कर्तिकामावास्यामधिकृत्य—

दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ।
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाविधि ॥

इत्यत्र यद्यपि तत्रेत्यनेनामावास्या परामृष्यते, तथापि प्रदोष इति श्रवणाद् दिवाभोजन-रहितो लक्ष्मीं सम्पूज्य भुञ्जीतेत्यर्थः । तेनामावास्याप्रदोषात् प्राक् चतुर्दश्यामप्यभोजनमेक-वाक्यतानुरोधात् । अत एवोभयप्रदोषे तल्लाभेऽपि प्रथमप्रदोष एव तदाचरणम्, प्राथम्यात् । 'रात्रिव्रतेषु सर्वेषु रात्रियोगो विशिष्यते' इत्यादेः 'चतुर्थी चाप्यमावास्या उपोष्याः स्युः परान्विताः' इत्यस्य दिवातनवेधविषयत्वादिति ।

आश्विनाधिकारे विष्णुधर्मोत्तरे तिथिव्यवस्थायाम्—

अष्टम्या नवमी युक्ता नवम्या चाष्टमी युता ।
अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥
एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
चतुर्थी चाप्यमावास्या उपोष्याः स्युः परान्विताः ॥
सप्तमी चाष्टमीयुक्ता नाष्टमी सप्तमीयुता ।
सर्वेषु व्रतकालेषु अष्टमी परतः शुभा ॥

भोजराजोऽपि—

न दिवा न निशा न च विष्टिहता न च सप्तमिशल्यसमोपहता ।
यदि चाष्टमिशेषभवा नवमी अमरैरपि पूज्यतमा कथिता ॥

अष्टमीति शेषः ।

विश्वरूपं परित्यज्य यत्र यत्र न लभ्यते ।
तत्र पूजा बुधैः कार्या लंघनीया न कर्हिचित् ॥

विष्टित्यागाशक्यत्वे स एवाह—

विष्टिं त्यक्त्वा महाष्टम्यां पूजां यः कुरुते जनः ।
तस्य पूजां न गृह्णामि तेनाहमपमानिता ॥

जम्भेन सप्तमीविद्धा पूजिता च महाष्टमी।
इन्द्रेण निहतो जम्भस्तदा दानवपुङ्गवः॥
तस्मात् सर्वप्रयत्नेन सप्तमीमिश्रिताष्टमी।
वर्जनीया हि मनुजैरात्मनः शुभकाङ्क्षिभिः॥
सप्तमीशल्यसंयुक्तां मोहादज्ञानतोऽपि वा।
महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते॥

दिनकृत्ये उभयस्मिन् दिनेऽष्टमीलाभे नवमीयुक्ताष्टमी कार्या। रात्रिकृत्ये तु तल्लाभ एव। या तु "सोपवासो निशार्द्धे तु महाविभवविस्तरैः" इत्यनेन विजयकामस्य तल्लाभे एव सूचितः।

आश्विने शुक्लपक्षे तु दशम्यां पूजयेत् ततः।
एकादश्यां न कुर्वीत पूजनं चापराजिताम्॥

अत्रैकादश्यां न कुर्वीतेति श्रवणादुभयत्र विहितकाले दशमीलाभे पूर्वविद्धायामेवापराजिता-पूजा, देवीविसर्जनमपि तदैव, तदन्तापकर्षन्यायात्तत इति श्रुतेरिति।

पूर्णिमामधिकृत्य—

दिवा तत्र न भोक्तव्यं मनुजैश्च विवेकिभिः।
स्त्रीबालवृद्धैर्मूर्खैश्च भोक्तव्यं पूजितैः सुरैः॥
पूज्याश्च सफलैः पुष्पैस्तथा द्वारोऽर्द्धभित्तयः।
द्वारोपान्ते प्रदीपस्तु संपूज्यो हव्यवाहनः॥
सम्पूजितश्च पूर्णेन्दुः पयसा पायसेन च।
रुद्रः सभार्यः स्कन्दश्च तथा नन्दीश्वरो मुनिः॥
गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः।
उरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः॥
पूज्यः साश्वैश्च रेमन्तो यथाविभवविस्तरैः।
तथा पूज्यो निकुम्भश्च सामिषैस्तिलतण्डुलैः॥

इत्यत्र निकुम्भपर्यन्तानां पूजनं पूर्वाह्ण एव, निरपवादश्रुतेः। पूजितैः सुरैरित्यादेर्लक्ष्मी-न्द्रयोः पूजनं तु रात्रावेव "कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम्" इति विशेषात्। न च कान्ता-प्रदीपदानस्य रात्रिकर्त्तव्यत्वे स्थिते "युगपत्तत्र कर्तव्या द्वादशैते महोत्सवाः" इत्यनेन यौग-पद्यविधानादन्येऽपि रात्रिकर्त्तव्या एवेति वाच्यम्, तत्रेति पदेन पूर्वप्रक्रान्ताश्विनपूर्णिमामात्रपरामर्शे रात्र्युपस्थापकपदविरहाच्च।

गौडास्तु—

अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
प्रयागे यदि लभ्येत सहस्रार्कग्रहैः समा ॥

तदित्थमत्र प्रयोगः—"ओं अद्य माघशुक्लसप्तम्यामरुणोदयवेलायां सूर्यग्रहकालीनप्रयागस्नानजन्यपुण्यसहस्रगुणपुण्यप्राप्तिकामः प्रयागे स्नानमहङ्करिष्ये" इति, न तु काले सहस्रार्कग्रहसम्बन्धोल्लेखो बाधादिति । अर्द्धोदयपरिभाषायां मध्यदेशीयाः पठन्ति—

अमार्कपातश्रवणैर्युक्ता चेत् पौषमाघयोः ।
अर्द्धोदयः स विज्ञेयः सूर्यपर्वशताधिकः ॥

'अमा' अमावस्या । अर्को रविवारः । पातो व्यतीपातः ।

अथ मन्वन्तरादयः—

अश्वयुक् कृष्णनवमी द्वादशी कार्तिके तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावस्या पौषस्यैकादशी तथा ।
आषाढस्यापि नवमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढी च पूर्णिमा ।
कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः । इति ।

यद्यपि कामधेनुनिबन्धे 'तृतीयामार्गमासस्य' इति पठितम्, तथापि कल्पतरुविरोधाद् 'मधौ तृतीये'ति ज्योतिश्शास्त्राच्च चैत्रतृतीयैव गृह्यते ।

अथ युगाद्या ब्रह्मपुराणे—

वैशाखशुक्लपक्षे च तृतीयायां कृतं युगम् ।
कार्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे कृष्णे त्रयोदश्यां तु द्वापरम् ।
माघे तु पौर्णमास्यां वै घोरं कलियुगं तथा ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्तिताः ।

अथ भाद्रकृष्णा त्रयोदशी शुक्लादिरीत्या बोध्या, औत्सर्गिकत्वात् लोकपरिग्रहाच्च । "नभस्य मासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे" इति विष्णुपुराणीयपञ्चदशीपदं पूर्णिमापरम्, द्वयोरेकवाक्यताबलात् । किं च माघावच्छेदेन पञ्चदशी पौर्णमास्येव, प्राथम्यात् । न च तत्र तमिस्रपक्ष इत्युनुषङ्गः ? ब्रह्मपुराणविरोधात् । एवञ्च 'दर्शे च माघमासस्य प्रवृत्तं द्वापरं युगम्' इति गौडीयवचनमनाकरमेव । साकरत्वे तु मन्वन्तरभेदेन समर्थनीयम् । हरिहरपद्धतौ तु पौर्णमास्यमावास्ययोर्युगाद्यित्वे विकल्प उक्तः प्रवृत्त्यनुपपत्तिपराहतः ।

अथावमत्र्यहं च—

अवमन्तत् स्पृशत्येको यत्र वारस्तिथित्रयम्।
तिथिस्तु यत्र वारांस्त्रींस्तत्त्र्यहं परिकीर्तितम्॥

अथ रविसंक्रान्तिः —

द्वादशैव समाख्याताः समाः संक्रान्तिकल्पनाः।
सप्तधा सा तु विज्ञेया एकैकैत्र यथा शृणु॥

मन्दा[१] मन्दाकिनी[२] ध्वांक्षी[३] घोरा[४] चैव महोदरी[५]।
राक्षसी[६] मिश्रिता[७] चैव संक्रान्तिस्सप्तधा नृप॥

'समाः' संक्रान्तित्वेन तुल्यफलाः, अयनत्वादिरूपेण विशेषफला अपि।

त्रिचतुः पञ्च सप्ताष्ट नव द्वादश एव च।
क्रमेण घटिका एतास्तत्पुण्यं पारमार्थिकम्॥

मन्दादिसप्तसु संक्रान्तिसु क्रमेण यथासंख्यं त्रिचतुरादिनाड्यः सूक्ष्मसंक्रमकालीनानुष्ठानजन्यपुण्यहेतवः, घटिका एव पुण्यहेतुत्वात् पुण्यमित्युक्तम्।

अतीतानागता भोगे नाड्यः पञ्चदश स्मृताः।

भोगो भोग्यः, तेनातीतानागतरूपभोग्यपञ्चदश नाड्यः पुण्यकालो भवतीत्युक्तं भवति।

जाबालशातातपौ—

अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश।
कालः पुण्योऽर्कसंक्रान्तौ विद्वद्भिः परिकीर्तितः॥
संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः।

एतद्दर्शनाच्च।

देवीपुराणेऽपि पञ्चदशनाडीभोगोऽप्युभयत एव, तदपि पञ्चदशपदस्वार्थायोगमात्रव्यवच्छेदपरम्। एतद्वचनबलादेव इदमपि दिवातनविष्णुपदीमात्रे। रात्रिसंक्रमणेऽनाकाङ्क्षितत्वादयनादावुदयवेलापुण्यनिषेधस्वरसाच्च। अयनादौ देवीपुराणम्—

अयने तु विकल्पोऽयं तन्मे निगदतः शृणु।
यावद्विंशकला भुक्ता तत्पुण्यं तूत्तरायणे॥
निरंशे भास्करे दृष्टे दिनान्तं दक्षिणायने।

विंशतिदण्डं यावत् पुण्यमुत्तरायणे, दक्षिणायने तु दिनान्तपर्यन्तं संक्रान्तौ पुण्यमित्युक्तम्।

तच्च—

षडशीतिमुखे चैव वृत्ते च विषुवद्वये।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे॥

इत्यनेकपर्यालोचनयोत्तरायणे षडशीतिचतुष्टये विषुवद्वये च संक्रान्त्यनन्तरं दक्षिणायने संक्रान्तिपूर्वसमये नेतव्यम्। तदप्यनुक्तविशेषे विषुवद्वये षडशीतिचतुष्टये षोडशनाडीपर्यन्तमेवानुक्तविशेषे, दृष्टत्वात्। न चैवमुदयानुपपदमेव दक्षिणायने संक्रान्तौ पुण्यं न स्यात्? भ्रान्तोऽसि, 'भविष्यत्ययने पुण्य'मित्यादिना तत्रापि तत्कथनात्, सामानाधिकरण्यस्य मानाभावनिरस्तत्वात्। न च दिनान्तमित्येकवाक्यतया तदस्तु, तस्य पक्षप्राप्तानुवादत्वात्। अन्यथा तत्स्नानादिबाधापत्तेः। न चैतदिष्टमेव —

दानाध्ययनजप्यादिविशिष्टं यज्ञहोमतः।
वसोर्द्धारा तु लभ्येत अन्यथा न कथञ्चन॥

इत्यादिबाधापत्तिरिति। वस्तुतस्तु पञ्चदशपदस्य स्वार्थायोगव्यवच्छेदमात्रपरत्वे मानाभावात्, अत एवानुक्तविशेषदक्षिणायने विषुवे षडशीतिमुखे वाऽऽकांक्षासत्त्वात्तस्यैवावच्छेदकत्वमिति युक्तमुत्पश्यामः।

तदेवं दिवासंक्रमणे व्यवस्थिते रात्रिसंक्रमणे देवीपुराणम्—

मानार्द्धं भास्करे पुण्यमपूर्णे शर्वरीदले।
सम्पूर्णे तूभयोर्देयमतिरेके परेऽहनि॥

मानार्द्धं दिनार्द्धम्, भास्करे निरंशके, देयं योज्यम्, दलेऽर्द्धे अतिरेके अर्द्धमात्रातिरेके। तदयमर्थः—अर्द्धरात्राभ्यन्तरे रविसंक्रान्तौ पूर्वदिनोत्तरार्द्धं पुण्यम्। अर्द्धरात्रोपरिसंक्रमणे उत्तरदिने पूर्वार्द्धम्, संपूर्णार्द्धरात्रे तु पूर्वदिने उत्तरार्द्धम् उत्तरदिने पूर्वार्द्धं च। एतच्च तिथिपार्थक्ये। यदि च पूर्वदिने संक्रमवेलायां चैकैव तिथिर्भवति तदा पूर्णार्द्धरात्रेऽपि संक्रमणे पूर्वदिनोत्तरार्द्धमेव पुण्यं भवति 'आदौ पुण्यं विजानीयाद् यद्यभिन्ना तिथिर्भवेत्' इति वचनात्। गौडास्तु—

कलान्यूनेऽर्द्धरात्रे तु यदि संक्रमणं रवेः।
तदहः पुण्यमिच्छन्ति गार्ग्यगौतमगालवाः॥

तदहःपदं दिनोत्तरार्द्धमात्रपरम्। "अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिये"ति तल्लिखितवाक्यात्। नन्वेवं रात्रिसंक्रमणेऽपि दिवैव पुण्यकथनात्—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्याद् निशि काम्यव्रतेषु च॥

इति वचनं रात्रिसंक्रान्तिकृत्यबोधकमनुपपन्नमिति चेन्मैवम्, रात्रिसन्निहितसंक्रान्तौ तत्तत्षोडशकलादिरूपातीतानागतविहितसमयेन रात्रेरपि व्यापनात् तद्विषयत्वेनोपपत्तेः। अत्र निशीतिपदमजहत्स्वार्थलक्षणया पर्युदस्तसमयपरम्; अन्यथा सायाह्ने विवाहादिसंक्रमोपरागयोः

स्नानादि न स्यादिति । इदं तु चिन्त्यते 'रविसंक्रान्तिरेव' चेत्यत्र पर्वनिषेधे लाघवेन तद्दिनस्यैव हेयता, न तु पुण्यदिनस्यैव, मानाभावात् । अन्यथा 'न कथञ्चने'त्यादिना तावन्मात्र एवावच्छेद-कत्वकल्पनादत एवाह—

रविसंक्रमणे पुण्ये न स्नायाद्यस्तु मानवः ।
सप्तजन्मन्यसौ रोगी दरिद्रश्चोपजायते ॥

## अथ ग्रहणम्

चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः ।

उपरक्तदर्शनानन्तरं यावद्दर्शनगोचरो दर्शनयोग्य उपरागस्तावत् पुण्यकालः, न तु संक्रान्तिवदधिकोऽपीत्यर्थः । योग्यता च दर्शनानन्तरं यावदुपरक्तकालीनदर्शनाभावानुमापक-लिङ्गविरह एव । अत्र च सूर्योपरागनिमित्तत्वप्रतिपादनाद् ज्ञातस्य निमित्तत्वेन ज्ञानमात्रे प्राप्ते 'यावद्दर्शनगोचरः' इति श्रुतेः राहुदर्शनसंक्रान्तीति श्रुतेश्च चाक्षुषज्ञानविषयस्यैवेह निमित्तता, चाक्षुषज्ञान एव दर्शनपदस्य शक्तत्वात् । न च—

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इति मनुना तदानीं दर्शननिषेधात्, दर्शनपदानुरोधेन शेषस्थगोचरपदेन तद्योग्यताया लक्षितत्वात् । वेदो वेत्यत्र तथैव सिद्धान्तनात् । तत्र हि त्रयो वेदा अजायन्त इत्युपक्रमस्य-वेदपदेन वेदनाजनकविभागपरतया तदभिधानात् । तदनुरोधादुपसंहारस्थैः "उच्चैर्ऋचा क्रियते उच्चैः साम्ना उपांशुयजुषा उच्चैर्निगदेन" इत्यत्र ऋग्यजुस्सामपदैरपि देशनाजनकविभागाभिधाने तस्य च करणत्वासंभवाद् ऋगादावाम्नातकर्मण्येव लक्षणयोच्यन्त इति सिद्धान्तः । अत्र च यजुषि उपांशुत्वविधानाद्यजुर्विशेषे निगदे उच्चैस्त्वमप्राप्तमिति तद्विधित्वाद् ।

अत्र दधितक्रवत् सामान्यविशेषन्याय इति कश्चित्, तन्न; निगदस्य परसंबोधनार्थकय-जुष्ट्वेनोच्चैस्त्वस्यानुपलभ्यत्वेन विशेषान्न दधितक्रवत् सामान्यविशेषन्यायः, किन्त्वनन्यगत्या पूर्वान्वितमात्रान्वयाद् गोवृषन्यायेन सामान्यविशेषन्यायात् । अत एव दधितक्रन्यायस्य प्राप्तातिरिक्तस्यापि प्रापकत्वेन गोवृषन्यायस्य प्राप्तप्रापकत्वेन सामान्यविशेषत्वेऽपि भेद इति ।

योग्यता च दर्शनबाधकमानाभावरूपा । सा च मेघगुल्मादिव्यवहितेऽप्यस्ति, मेघाद्यपगमे ग्रासदर्शनस्यापि संभवात् । मेघाद्यावृतत्वेन दर्शनाभावस्यानुमानाभावात् । दोषातनरविग्रहदिवा-तनशशिग्रहयोस्तु दोषातनत्वादिनैव दर्शनाभावोऽनुमातुं शक्यत इति न तत्र योग्यता । तेनैवाहश्ययोग्यतालिङ्गितो ग्रासो यावदनुवर्तते दर्शनानन्तरं तावत्पुण्यकाल इति न

प्रयत्नानपेयप्रतिबन्धकविरहो योग्यतेति केचित्, तन्न; दर्शनोत्तरं मेघच्छन्नेऽप्य-नधिकारापत्तेः। किं च दिवातनशशिग्रह-दोषातनरविग्रहयोरत एव निरासः। यदि कोऽपि ग्रासं पश्यति तदा योग्यता ज्ञायते। मेघच्छन्ने कस्यचिद्दर्शनासंभवेन तत्रार्थतो योग्यतोपगमादिति तल्लिखनविरोधापत्तेः। अन्यदृष्टे ग्रासेऽन्यस्य स्नानाधिकार इति केचित्, तन्न; लाघवेन सामानाधिकरण्यस्यैव प्रयोजकत्वात्।

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च ॥
सूर्यवारे रविग्रासश्चन्द्रवारे शशिग्रहः ।
चूडामणिरिति ख्यातस्तस्यानन्तफलं स्मृतम् ॥
इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं तथा ।
गङ्गातीरे तु संप्राप्ते इन्दोः कोटी रवेर्दश ॥

यत्तीर्थस्नानजन्यं प्रकृतं यत्फलं तदिन्दुग्रहे लक्षगुणं भवति। गङ्गायां तु चन्द्रग्रहे कोटिगुणं रविग्रहे दशकोटिगुणं स्नाने फलं भवतीत्यर्थः।

सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥
सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥
सूतके मृतके स्नायाद् ग्रस्तयोश्चन्द्रसूर्ययोः ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥

एवं चैतद्वचनबलादेव तर्पणान्तं स्नानमशुचिनापि कार्यमिति केचित्, तन्न; एतद्वचनस्यैव निर्मूलत्वात्। ग्रहणकाले चागत्या उद्धृतोदकेन स्नानकरणे तदानीमेव जलाशयात्तोयमुद्धरणीयम्, तेन स्वर्धुन्यम्भस्समता तत्कालभूमिष्ठस्य तस्य भवति। पूर्वोद्धृतस्य तस्य मानाभावेन तोयमात्रतैव, 'स्वर्धुन्यम्भस्समानि स्युस्सर्वाण्यम्भांसि भूतले' इति श्रुतेः।

अहोरात्रं च नाश्नीयाच्चन्द्रसूर्यग्रहो यदा ।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥
सूर्याचन्द्रमसोर्लोका न क्षयान् याति मानवः ।
धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत् ॥

इदं च राहो रात्रावनशनं काम्यम्, फलश्रुतेः। तत्रापि मेघादितो मुक्तादर्शनपक्ष एव, 'मुक्तं दृष्ट्वा तु भुञ्जीत' इति श्रुत्या मुक्तदर्शनानन्तरमथापि भोजनविधानात्। एवं कामनाविरहे

तत्रापि मुक्ति प्रमाय भोक्तव्यमुक्तवचनात् । मुक्तस्य मेघतोऽदर्शनेऽप्यनुपदमस्तमने वा भोजनमदुष्टमेव । अत एव--

नाश्नीयादथ तत्काले ग्रस्तयोश्चन्द्रसूर्ययोः ।
मुक्तयोश्च कृतस्नानः पश्चात् कुर्यात् स्ववेश्मनि ॥

अत्र मुक्तयोरविधानेन मुक्तिमात्रस्यैवापेक्षणीयत्वसिद्धेः । कुर्यादित्यत्र विपरिणतमशन-मित्यनुषज्यते । ज्योतिषे—

अर्द्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत् ।
सायन्तत्र न भुञ्जीत न तु प्रातरभोजनम् ॥
नाद्यात् सूर्यग्रहात् पूर्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाच्च मुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।

महानिशा च प्रथमसार्द्धप्रहरोत्तरमुहूर्त्तचतुष्टयम् । तथा 'स्नात्वा दृष्ट्वा परेऽह्न्यद्याद् ग्रस्तास्तमितयोस्तयोः' । अत्र च ग्रस्तास्ते यन्मुक्तिपर्यन्तमभोजनं तदावश्यकम्, एतद्वचनबलादेव । अत एव विष्णुरपि "सूर्यचन्द्रोपरागेनाश्नीयान्मुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहनि चाश्नीयात्" इति । दर्शनञ्चात्र चाक्षुषज्ञानम्, तत्रैव दृशेः शक्तेः । न चैवमुत्तरदिने मेघाच्छन्नेऽप्यभोजनं स्यात् ।

मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते ।
आकलय्य तु तत्कालं भुञ्जीताथाविशङ्कितः ॥

इति निरवकाशप्रवर्त्तमानवचनेन तदानीं तत्रापि भोजनविधानात् । बालवृद्धादेः प्रहरचतुष्टयमनशनाशक्तस्य 'अर्द्धरात्रे व्यतीते' इत्याद्युक्ता व्यवस्था । अत एव गोतमः—

सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥ इति ।

अत्राप्यशक्तं प्रति मार्कण्डेयपुराणे—

सायाह्ने ग्रहणं चेत् स्यादपराह्णे न भोजनम् ।
अपराह्णे न मध्याह्ने मध्याह्ने चेन्न सङ्गवे ॥
ग्रहणं सङ्गवे चेत् स्यान्न पूर्वं भोजनक्रिया ।

इति संक्रमोपरागादौ पूर्वदिने तद्दिने वा यदुपोषणं काम्यमुक्तं तत्पुत्रवता गृहिणा न कार्यम्—

संक्रान्तौ रविवारे च ग्रहणे चन्द्रसूर्ययोः ।
पारणं चोपवासं च न कुर्यात् पुत्रवान् गृही ॥

इति वचनात् । अयं च तन्निमित्तोपवासस्य निषेधः, न त्वेकादश्यादेरपि

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृतो दोषो यतो नित्यमुपोषणम् ॥

इति श्रवणात् । वैधकर्मचिकीर्षुणा तु ग्रहणपूर्वं सर्वथा न भोक्तव्यम्—

ततः शरीरस्रोतोभ्यो मलनिस्पन्दविश्रवात् ।
अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः ॥

इति श्रुतेः ।

न चार्द्धरात्र इत्यादिलिखितं वचनमप्रायत्योपमर्दकम् ? बाधसापेक्षतापत्तेः । किंतु सुखरात्र्यादौ बालादिभोजनवत् प्रत्यवायाभावमात्रबोधकमेव । हन्त ! तथापि 'तावदेव भवेच्छुद्धिः' इत्यादिवचनादशुचेरपि दानाधिकारोऽस्तु ? न, वचनस्यैव निर्मूलत्वात् । समूलत्वेऽप्युपसंहारानुरोधेन साङ्गस्नानमात्रबोधकत्वादिति ।

## अथ पतिव्रताधर्माः

आर्त्ताऽऽर्त्ते मुदिते हृष्टा प्रोषिते विमना तु या ।
मृते वा म्रियते नारी सा विज्ञेया पतिव्रता ॥

अत एवानुमरणपर्यन्तेन तन्निर्वाहः । प्रोषिते तु विशेषमाह—

देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥

अत्र पादुकाद्वयमुपलक्षणम् । फलानि तु—

मृते भर्तरि या नारी प्रविशेद्धव्यवाहनम् ।
सारुन्धतीसमाचारा स्वर्गलोके महीयते ॥
तिस्रः कोट्योर्द्धकोटी च यानि रोमाणि मानवे ।
तावन्त्यब्दानि सा स्वर्गं भर्तारं यानुगच्छति ॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
तद्वद्भर्तारमादाय तेनैव सह मोदते ॥
मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।
पुनाति त्रिकुलं नारी भर्त्तारं यानुगच्छति ॥

त्रिंशत् परान् त्रिंशदपरान् त्रिंशच्च परतः परान्।
पुनाति त्रिकुलं नारी भर्तारं यानुगच्छति॥
ब्रह्महा वा कृतघ्नो वा मित्रघ्नो वापि मानवः।
तं वै पुनाति सा नारी भर्त्तारं यानुगच्छति॥
साध्वीनामेव नारीणामग्निप्रपतनादृते।
नान्योऽस्ति धर्मो विज्ञेयो मृते भर्तरि कर्हिचित्॥

एवकारोऽप्यर्थः, समुचितस्यैव फलस्य कामनाविषयत्वमेकवाक्यताबलात्। पतिव्रतया पतिव्यवधाने तद्भोजनकालमवधार्य तदुत्तरं भोक्तव्यम्। अत एव भारते नलव्यवधाने दमयन्त्या भोजनमुक्तमिति।

भविष्यपुराणे—

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा।

कूर्मपुराणे—

शैवं भागवतं चैव भविष्यन्नारदीयकम्॥

अत्रोभयत्रापि भागवतं भगवतीपुराणमेव। अत एव संहितायां तत्र तत्र तद्वचनान्येवोपगृहीतानि, न त्वन्यत्, निबन्धकृद्भिस्तद्वचनानामनुपग्रहात्। अत एव भारतादिवत् स्मृत्याकारेणापरिणतत्वान्न तस्य प्रामाण्यमपीति तत्त्वम्।

यत्तु "क्षेत्रापरपुरग्रामान् दत्वा मत्समतामियात्" इत्यादीनि नगरयाचकैरतिलुब्धैरुपगृहीतानि किं तावतेति।

मत्स्यपुराणे—

द्वियोजनमथार्द्धं च पूर्वपश्चिमतः स्थितम्।
वरणासिर्नदी या च या च शुष्कनदी तथा॥
एष क्षेत्रस्य विस्तारः प्रोक्तो देवेन शूलिना।
अर्द्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्थितम्॥
वरणासिर्नदी या च या च शुष्कनदी तथा।
भीमचण्डीं समारभ्य पर्वतेश्वरमन्तिके॥

स्कन्दपुराणे—

चतुः क्रोशं चतुर्दिक्षु क्षेत्रमेतत् प्रकीर्तितम्।
योजनं विद्धि चार्वङ्गि मृत्युकालेऽमृतप्रदम्॥

अत्र च कल्पभेदेन परिमाणभेदो द्रष्टव्यः, तेन न विरोधः ।

असीवरणयोर्मध्ये वाराणसीक्षेत्रमिति तु नियम एव । तेनासीतः पूर्वं वरणातः पश्चाद्वाराणसीक्षेत्रमिति रहस्यम् ।

लिङ्गपुराणे शिववाक्यम्—

पिङ्गला नाम या प्रोक्ता आग्नेयी सा प्रकीर्त्तिता ।
शुष्का सरिच्च संज्ञेया लोलार्को यत्र तिष्ठति ॥
इडानाम्नी तु या नाडी सा सौम्या संप्रकीर्त्तिता ।
वरणा नाम सा ज्ञेया केशवो यत्र संस्थितः ॥
आभ्यां मध्ये तु या नाडी सुषुम्ना सा प्रकीर्त्तिता ।
मत्स्योदरी च सा ज्ञेया विषुवत् तत् प्रकीर्त्तितम् ॥

एवं लोलार्ककेशवयोः शुष्कनदीवरणातीरस्थयोर्मध्ये मत्स्योदरीसंज्ञकनदीचिह्नितं वाराणसीक्षेत्रमिति वर्त्तुलार्थः । असीति गङ्गाक्षेत्रमग्ना वरणासङ्गता वाराणसीक्षेत्रपूर्वस्यां दिशि, वाराणस्यां पूर्वदिशि असी नास्त्येव, किन्तु गङ्गापूर्वकूलमपि क्षेत्रान्तर्गतमेव । अत एव—

क्षेत्रमध्याद्यदा गङ्गा गमिष्यति सरित्पतिम् ।
तेन सा महती पुण्या पुरा रुद्र ? भविष्यति ॥

इति ब्राह्मे ब्रह्मवाक्यमपि संगच्छते । किञ्च—

आमध्याद्देवसरित आहरिश्चन्द्रमण्डपात् ।
आगङ्गाकेशवाच्चापि आस्वर्गान्मणिकर्णिका ॥

इति मणिकर्णिकाप्रमाणमपि घटते । तदेतदयुक्तम्,

वरणा चाप्यसिश्चैव द्वे नद्यौ देवनिर्मिते ।
अन्तराले तयोः क्षेत्रं भूमावपि विशेन्न तत् ॥

इति वाक्यपर्यालोचनयाऽसीबाह्यस्य वरणासी क्षेत्रत्वाभावे सिद्धे क्षेत्रमध्याद्यदा गङ्गा गमिष्यति सरित्पतिमिति वचनाद् यद्यपि क्षेत्रमध्ये गङ्गाप्रवाह इत्यापाततः प्रतीयते, तथापि क्षेत्रमध्यपदं क्षेत्रस्यांशमात्रपरम्, ग्राममध्येन गत इतिवत् । एतदपि प्रायिकमेव, आमध्या-दित्यत्र च देवसरित्पदम् असीनदीपरमेव, 'द्वे नद्यौ सुरनिर्मिते' इत्यादिसंवादात्, अन्यथा—

नदी वाराणसी चेयं पुण्या पापप्रणाशिनी ।
क्षेत्रमेतदलंकृत्य जाह्नव्या सह सङ्गता ॥

इत्यसीवरणासङ्गमबोधकस्कन्दपुराणवचनविरोधः स्यात्, वरणायुक्तासीति तद्विवरणात् ।

वाराणसीजाह्नवीभ्यां सङ्गमे लोकविश्रुते।
दत्त्वान्नं च विधानेन स भूयो नाऽभिजायते॥

स्कान्देऽपि—

नदी वाराणसी चेयं जाह्नव्या सह सङ्गता।
सङ्गमे देवनद्योश्च यः स्नात्वा मनुजः शुचिः॥

इत्येतदपि घटत इति दिक्॥

इति महामहोपाध्यायकेशवमिश्रविरचितं
महामहोपाध्यायकल्याणमिश्रसुश्लिष्टं
द्वैतपरिशिष्टं समाप्तमिति शिवम्॥



